॥ श्रीः ॥

योगमकरन्दसहिता

# योगमञ्जरी ।

॥ श्रीं नमोभगवते वासुदेवाय ॥

अम्बां श्रीतुलसीमतुल्यविलसद्वात्सल्यसीमान्तथा
तातं श्रीगिरिधारिणं द्विजजनक्षेमैकदीक्षाधरम् ।
शास्त्राम्भोज विकासवासरमणिं श्रीराममिश्राह्वयं
श्रीमन्तञ्चगुरुं जनःपुनरयं नित्यं नमस्त्यञ्जसा ॥ १ ॥

* योगमञ्जरिकया कया चिदप्येतया मुद मुदावहन्तु भोः।
अत्र योगमकरन्दसुंदराऽमन्दतुन्दिलहृदा सदालयः ॥२॥

स्वानुजशालिग्रामाध्ययनस्य कृते कृतेयमस्ति कृतिः ।
श्रीहरिदासपितृव्यप्रेरणया योगमञ्जरी नाम्ना ॥३॥

तत्र तावन्निजनिर्म्मितयोगमकरन्दव्याख्यानं चिकीर्षु-र्विघ्नविघाताय कृतं स्वेष्टदेवतानिर्देशरूपमङ्गलं शिष्य शिक्षायै निबध्नाति ।—" यस्य भासेति " ।

---

* सतामालयः सदालयः सर्वे विद्वज्जनाः " कया चिदपि " इत्यनेनै-तद्ग्रन्थनिर्माणे ग्रन्थकर्त्तु रनायासो व्यज्यते यद्वा चतुभवैकगम्य-सारयाऽनया मञ्जुलया योगमञ्जर्या मोदमासादयन्तु, या खलु योगमक-रन्दो नाम मूलकारिकाग्रन्थस्तत्प्रतिपाद्यार्थप्रतिपादनपरा अथ च सदा मधवो भ्रमरा—इत्यादिर्द्वितीयोऽर्थः स्वयमूहनीयः ।

यस्य भासा जगत्सर्वं भाति स्थावर जङ्गमम् ।
भ्रान्तिमात्रैकदेहन्तं विश्वनाथमहम्भजे ॥ १ ॥
क्लेशकर्मसुखबन्धबन्धने र्दूरतः परिपलाय्यते सदा ।
यत्र चेतसि सकृत्समागते तं परं पुरुष माश्रयामहे॥२॥

तत्र श्लोकार्द्धेन स्वेष्ट देवताया निखिलजगदवभास-कत्वप्रतिपादनात् " तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती" तिश्रुत्यर्थोऽपि भवति सूचितः । एतदुक्तम्भवति यद्यपि नित्य शुद्ध बुद्ध मुक्तस्वभावः परमान-न्दमूर्त्ति र्भगवान् विश्वनाथोनास्ति तस्याणुरपि गन्धो-देहसम्बधस्य तथाप्यतीवघोर संसाराङ्गार परिपच्यमाना-ङ्गानां जनन मरणान्धकारे विपरिवर्त्तमानानामर्वाग्दशां जन्तूनां स्थान्नाम कथञ्चित्क्लेशतिमिरविनाश इति करु-णया देहमुपात्तवान् ॥ १ ॥

स्वप्रकाशमदं निर्विशेषंब्रह्म निर्दिश्य प्रकृतशास्त्रानुसा-रेण सविशेषं प्रणमते—।"क्लेश कर्म्मेति" । यस्मिन् भगवति पुरुषोत्तमे भजता जनेन स्वहृदये सकृदपि साक्षात्कृते-सति भक्तस्य क्लेश कर्म्म विपाकाशयाः सर्वथा नश्यन्ति मुक्तो भवति स इति यावत् तस्य तु पुनर्भगवतः किमुव-क्तव्य तेभ्योऽस्पृष्टत्वमित्यवता " क्लेश कर्म्म विपाकाशयै रपरामृष्ट " इत्यादिः प्रकृतशास्त्रार्थः कापिलतन्त्रादसा-धारणोऽपि भवति ध्वनितः ॥ २ ॥

इह खल्वपवर्गसिद्धये बह्ननुपायानुपदिशन्ति तीर्थकारास्तद्यथा वस्तुतत्त्वज्ञानमौपनिषदाः सप्तपदार्थज्ञानं च काणभुजाः। कर्माणि च मीमांसकाः। तत्र न प्रथमः कल्पः— एतन्मते वस्तुतत्त्वस्याविषयत्वेन तद्विषयज्ञानासम्भवाद् यदि च कर्मधारयमाश्रित्य वस्तुतत्त्वभूतमेव ज्ञानमपवर्गसाधनं नतु तद्विषयमित्युच्येत तथापि ज्ञातं सत्तदपवर्गसाधनमज्ञातं सद्वा। न ज्ञातं सत्तदपवर्गसाधनं सविषयत्वापत्तेः। नाप्यज्ञातं सदिति, अज्ञातसतस्तस्यापवर्गाजनकत्वान्नह्यज्ञातं सत्तदपवर्गजनकमज्ञातसतो-वस्तुतत्वस्य सार्वदिकत्वेन सर्वदा मोक्षजननप्रसङ्गादननुभूतवस्तुतत्त्वानामप्यपवर्गसिद्धिप्रसङ्गाच्च तन्निरासाय ज्ञातस्य तस्य कारणत्वाङ्गीकारे निरुक्त एव स विषयत्वापत्तिदोषः किञ्च ज्ञानानां सविषयकत्वनियमानुरोधेन वस्तुतत्त्वभूतज्ञानेऽपि सविषयकताया अवश्यमङ्गीकरणीयत्वेन तज्ज्ञानमपि वस्तुतत्त्वान्तरविषयं वक्तव्यमिति कस्यापवर्गहेतुत्वं पूर्वस्यापरस्य वेत्यपि पर्य्यनुयोगापत्तेरनवस्थादयो दोषास्तु स्फुटा एवेति न वस्तुतत्त्वज्ञानमपवर्गजनकमिति।

नापि द्वितीयः—अपवर्गहेतुत्वेन काणभुजाभिमतपदार्थज्ञानस्यार्वाग्दृशामनुत्पत्तेः। नच सामान्यलक्षणया तज्जन्यत इति साम्प्रतम्। तज्जनितज्ञानस्याभिज्ञान—

भिन्नोभयसाधारण्येन हेतुत्वानुपपत्तेः । नहि सामान्य लक्षणाजनितं ज्ञानमपवर्गसाधनायालमलौकिकत्वान्नह्य-लौकिकं तदविद्यामुच्छेत्तुमीष्टे तस्या लौकिकैक साक्षा-त्कारनिवर्त्त्यत्वात्तदुच्छेदकत्वेपि तज्जनितज्ञानस्या वि-दुषोऽपि सम्भवात्तस्यापि मोक्षभागित्वं प्रसज्यतेति न सामान्यलक्षणाजनितं ज्ञानमपवर्गसाधकम् । नचैतज्ञियैव तज्जनितज्ञानमपवर्गनिर्वर्त्तकमिति नोच्य-तेऽपि तु तत्तद्धर्म्मप्रकारकं लौकिकमिति, पदार्था नामानन्त्येन विशिष्य तत्तधर्म्मपुरस्कारेण ज्ञातुमशक्य-त्वात्। नच पदार्थानां तत्तद्धर्म्मपुरस्कारेण ज्ञातुमशक्य-त्वेपि सुकरं तदीयं विभाजक रूपेणज्ञानमिति, तस्यापि स्वाश्रयीभूतयावद्व्यक्तिग्रहमन्तरानुत्पत्तेस्स्वाश्रयीभूतयाव-द्व्यक्तिग्रहस्यावीग्दृश्यामनुपपन्न इति न काणभुजं मत-मपि सम्यक् ॥

नापि तृतीयः । कर्म्मणामविवेकनिवर्त्तकत्वासम्भवा-न्नहि कर्म्माणि साक्षादविवेकप्रतिबन्धकान्यविवेकस्य स्वविरोधिविवेक प्रतिबध्यत्वात् । नहि विवेको नाम कश्चित्पृथक् प्रतिबन्धकतया भवदभिमतोयः प्रत्युदितः समूलघातं निवर्त्तयेदविवेकं कर्म्माणि च स्वयमेवा-शुद्ध्यादि युक्तानीति नालं विवेकं जनयितुं प्रागेवाप-वर्गमिति कक्षान्तराभिमतापगवर्गोपायानामनुपायत्वेन

योगविद्भिताऽ विप्लवा विवेकख्यातिरेव मं त्रसाधनमिति सिद्धं सा च योगाङ्गानुष्ठानजनिताशुद्धिसमुच्छेदानुवर्त्ति ज्ञानदीप्त्याऽऽसाद्या तथा चाहस्म महर्षिर्भगवान् पतञ्जलि " योगाङ्गानामनुष्ठानादशुद्धिचये ज्ञानदीप्ति- राविवेकख्याते" रिति॥ योगस्वरूपमाह—।"निरोध"इति।

निरोधश्चित्तवृत्तीनां स योगोद्विविधोमतः ।
निर्बीजः प्रथमश्चैकस्सवीजस्स्याच्चतुर्विधः ॥ २ ॥

तल्लचणं च क्लेश कर्म्म विघटकत्वे सति चित्तवृत्ति निरोधत्वम्। चिप्त मूढादिषु माभूद्योगत्वमिति सत्यन्तनिवेशस्तथा च तत्र वृत्ति निरोध सत्त्वे पि क्लेश कर्म्माद्यविघटकत्त्वात्तस्य न तेषु योगत्वम् । विवेकख्याता— वपि तद्विघटकत्वसत्त्वात्तद्वारणाय निरोधान्तम्—यद्वा स्वरूपावस्थितिहेतुचित्तवृत्तिनिरोधत्वं योगत्वमिति लच्चणम्। निरोधश्चात्र वृत्तिनिष्ठ प्रतियोगिताकोभावरूपएव बोध्योन तदविच्छिन्न प्रतियोगिताकत्वेन न सम्प्रज्ञातात्मक योगापरिग्रहो न वाऽभावरूपस्य तस्य संस्कारप्रतिबन्धकतानुपपत्तिः। योग शब्दश्च युजिसमाधावित्यस्मान्निष्पन्नोमतु युजिर्योगे—इत्यस्मात् "तं विद्याद्दुःख संयोगवियोगं योगसंज्ञितमि" त्यादिना भगवद्गीतासु वियोगस्यैव योग प्रतिपादनात्। स्यादेतत्—चित्तवृत्ति निरोधो योग एव कथं चित्तस्य चिन्त्यनैकवृत्तिकत्वात्तदीयचिन्त्यनैक

वृत्तिनिरोधेऽपि तदितरसङ्कल्पाभिमानाध्यवसायरूप वृत्तीनामनिरोधान्नर्वाह चित्तवृत्तिमात्रनिरोध एव कस्य चिद्भिमतो योगी व्युत्थानसाधारण्यादनिरुद्धसङ्कल्पादि वृत्तिमतामपि योगिनामिव ज्ञानदीप्तिप्रसक्तेश्च तस्मान्नचित्त वृत्ति निरोधो योग इति साम्प्रतमिति प्राप्ते—

उच्यते—चित्तपदेनात्रान्तःकरणसामान्यस्य महतोऽभिधानान्महांश्च प्रकृतेराद्यपरिणामस्तस्य च सङ्कल्पाभिमानाध्यवसायचिन्तनात्मक वृत्ति चतुष्टयवानिति युक्तं तन्निरोधस्य योगत्वम् । न च महतो वृत्तिचतुष्टयात्मकत्वे, "प्रकृतेर्महांस्ततो हङ्कार स्तस्माद्गणश्च षोडशकः" इति साङ्ख्यकारिकायां मनसोऽहङ्कारस्य च महतः पार्थक्येनाभिधानात्सविरोध इति शङ्क्यम् । तत्र सर्ववृत्त्यङ्कुरी भूत महतस्सङ्कल्पाभिमानात्मकवृत्ति रूप विशेषमादाय पार्थक्येनाम्नानादत एव क्वचिच्चतुष्टयं क्वचित्त्रितयं क्वचिद्द्वितयमन्तः करणं भाषन्ते शास्त्रकृतः । तथाचोक्तं वासिष्ठे—" अहमर्थोदयो योयं चित्तात्मा वेदनात्मकः । एतच्चित्तद्रुमस्यास्य वीजं विद्धि महामते ॥ एतस्मात्प्रथमोद्भिन्नादङ्कुरोऽभिनवाकृतिः । निश्चयात्मा निराकारो बुद्धिरित्यभिधीयते ॥ अस्य बुद्ध्यभिधानस्य याङ्कुरस्य प्रपीनता । सङ्कल्परूपिणी तस्याश्चित्त चेतोमनोऽभिधेति " तथाचात्र वाक्येऽहमर्थेनान्तःकरणसामान्यमभिधाय स्फुटास्तदीयाश्चित्ताद्यवस्थाभेदाः प्रद-

र्पिता इति युक्तं चित्तपदेनाच प्रकृत्याद्यपरिणामस्य महतोऽभिधानं * तच्च त्रिगुण प्रकाश प्रवृत्ति स्थिति शीलत्वात्सत्त्वगुणं प्रकाशशीलत्वाद् रजोगुणं प्रवृत्ति शीलत्वात् तमोगुणं पुनस्स्थितिशीलत्वात् सत्त्वगुणमैश्वर्य्यं विषयप्रियं चित्तं तद्देवादीनाम् । रजोगुणमस्थिरं तच्चदैत्यदानवादीनाम्। क्रोधद्वेषादि वृत्तिमत्तमोगुणं तच्चरक्षः पिशाचादीनाम्। नन्वेकमेव चेच्चित्तं कथमनेकास्वप्येव चैकमनेकावस्थमभवितुमर्हतीति चेत्सत्यम् एकस्यापि चित्तस्य त्रिगुणनिर्म्मितत्वेन गुणानां वैषम्यादन्योन्यविरुद्धवैचित्र्यविचित्रावस्थासम्भवात्सलिलवत् यथैकस्यापि सलिलस्य स्थाश्रययावदुपाधिभेदनिबन्धनं सम्भूतं वैचित्र्यमेवमेवैकस्यापि चित्तस्य विरुद्धभेद निबन्धनं वैचित्र्यमिति । अथ कीदृशं तच्चित्तं यदीयवृत्तिनिरोधो योगोऽभिहितः । मध्यमपरिमाणवदणु विभु वेति । अत्र साङ्ख्याः मध्यपरिमाणवदेव चित्तं तच्च सङ्कोच विकोशशालि देहाकारपरिमाणं घट गेहादि प्रदेशान्तर्वर्त्तिप्रदीपवत्तथा कार्य्यदर्शनाद् यथादीपो घट गेहादि प्रदेशान्तस्स्थो घटाद्गेहादा न वहिरव भासयति नावभासयति वहिस्तथा चित्तमपि देहप्रदेशान्तर्वर्त्ति प्रमाणाभावाद्देहाद्वहिश्चित्तसञ्चावेऽत चित्तमेव

* चित्तं

मातङ्ग कुरङ्ग भृङ्गादिदेहेषु सङ्कोच विकाशौ सम्पद्यते घटप्रासादादिमध्यवर्त्ति प्रदीपवदिति सङ्कोच विकाशशालि मध्यमपरिमाणवच्चित्तमिति स्थितमिति ब्रुवते ॥ अपरे तु-अणुत्वमेव चित्तस्य ज्ञानानां यौगपद्येनोत्पत्त्यसम्भवान्नहि ज्ञानानि युगपदुत्पत्तुमुत्सहन्ते येन स्वीक्रियेत चित्तस्य सङ्कोचविकाशशालित्वं विभुत्वं वाऽन्यथाविरुद्ध स्वभावयोः सुख दुःखयोरप्यनुभवस्य युगपज्जननापत्तेः। नहि कदाचित्कोपि कथञ्चित्सुखदुःखे सहदेकक्षणेऽनुभवति विरुद्धत्वात्तद्विषयकानुभवयोस्तथा च सूत्रम् "युगपज्ज्ञानानुत्पत्तिर्मनसोलिङ्ग" मिति नचेदं विरुद्धमुच्यते युगपज्ज्ञानानि नोत्पद्यन्ते पादयोर्मे वेदना शिरसि मे सुखमिति ज्ञानयौगपद्यानुभवादिति,—युगपत्क्षणोत्पत्तिकत्वप्रतिषेधात्—नहि वयं युगपदवस्थितिकत्वं ज्ञानानां वारयामोऽपितु युगपत्क्षणोत्पत्तिकत्वं तथाच न दोषः पादयोर्मे वेदना शिरसि मे सुखमिति भिन्नक्षणोत्पत्तिकयोरपि ज्ञानयोर्युगपदवस्थाने, सहोत्पत्तिकत्वानुभवस्यातीवतीव्रवेगशालित्वाच्चित्तस्येति पर्य्यायेणेन्द्रियैस्सम्बध्यमानमणु चित्तमित्यभिदधिरे ॥ विभु चित्तं वृत्तिरेवास्य विभुनस्सङ्कोचविकाशशालिनीति योगाचार्य्यास्तत्र नाद्यश्चित्तस्य मध्यमपरिमाणवत्त्वेन सावयवत्वापत्त्या कदाचिद्विवेकख्यातेः प्रागपि घटादीनामिव विनाशित्व

सम्भवात्। नापि द्वितीयश्चित्तस्याणुत्वेन देहव्यापि ज्ञानानुपपत्तिरित्यादि दोष प्रसक्तेरिति तृतीय एव सम्यगवशिष्यत इतिनिरुक्तचित्तवृत्तिनिरोधस्वरूपं योगमुक्त्वा-तस्य द्वैविध्यमाह- "स" इति। स वृत्तिनिरोधात्मको योगोद्विविधोऽसम्प्रज्ञातसम्प्रज्ञातश्च तत्रासम्प्रज्ञात एक विधो निर्वीजपदेनापि व्यपदिश्यते निर्गतं क्लेशकर्म्मादि वीजं यस्येतिव्युत्पत्तेः। क्लेशकर्म्मादि वीजसहितत्वात्तु सम्प्रज्ञातस्सवीजपदव्यपदेश्यस्स च वितर्कं विचारानन्दास्मिता भेदाच्चतुर्विधस्तत्र य इन्द्रियाण्यात्मबुद्ध्योपासते तेषां समाधिर्वितर्कः ये भूतादीन्येवात्मबुद्ध्योपासते तेषां विचारः। येऽभिमानमेवात्मबुद्ध्योपासते तेषामानन्दः। ये बुद्धिमेवात्मबुद्ध्योपासते तेषामस्मिता। वितर्क्यन्ते रूपादिज्ञान सकरणकत्वानुमितिविषयीक्रियन्त इति वितर्काणीन्द्रियाणि। विचरन्ति विशिष्य प्रवर्त्तन्ते व्यापृता भवन्तीन्द्रियाणि येषु तानि विचाराणि भूतानि—विशिष्येन्द्रियाणां चारस्य प्रवृत्तेर्व्यापारस्य भूताद्यात्मकविषय देश दर्शनाद्युक्तं विचारत्वं भूतानाम्। सत्स्वपि विषयेषु तत्र निजाभिमानाऽभावे विशिष्यानन्दस्यानुदया—दित्यभिमानपूर्वकत्वाद्विषयानन्दस्येत्यभिमानेष्युपचरितानन्दशब्दप्रयोगसम्भवादानन्दोत्राऽभिमानः। पुरुषाविवेके

बुद्धावप्यस्तीति प्रत्ययविषयतासम्भवादित्यस्मिता बुद्धिस्त घाचविषयव्यपदेशमादाय विषयिसमाधीनां तथा व्यप· देशस्तस्मादिन्द्रियविषयो वितर्कः । भूतविषयो विचारः— अभिमानविषयश्चानन्दः—बुद्धिविषया चास्मितेति त्रिष्व- नंतथा च पर्य्यायेणोत्तरोत्त रसमापत्तिसतां क्रमशोऽ- धिकाधिकतराधिकतमानन्दलाभोपि सम्भवति सूक्ष्म- त्वात्पूर्वस्मात्पूर्वस्मादुत्तरोत्तरेषां तथा चोत्तरोत्तरस्य परत्वे श्रुतिः । " इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं * मनोमनसस्तु परा बुद्धि" रिति स्मृतिश्च व्यक्तमेव दश-शत- सहस्र-दशसहस्र-मन्वन्तरभेदेनेन्द्रियादिचिन्तकानामुत्त- रोत्तरमानन्दन्दर्शयति तद्यथा " दशमन्वन्तराणीह तिष्ठ न्तीन्द्रिय चिन्तकाः । भौतिकास्तु शतं पूर्णं सहस्रन्त्वाभि- मानिकाः ॥ बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वरा " इति—अत एवाग्रे "पूर्णं शतसहस्रन्तु तिष्ठन्त्यव्यक्तचिन्तका" " इत्यनेन प्रकृतिलयान्प्रति चतुष्टयानुगताव्यक्तविषय सम्प्रज्ञातस्य पूर्णफलमभिधाय " पुरुषं निर्गुणमाप्य कालसङ्ख्या न विद्यत इति काल संख्याऽभाव प्रतिपाद- नेन सर्ववृत्त्यभावरूपोऽसम्प्रज्ञातयोगः प्रदर्शित इति-

* मनःपदेनाहङ्कारो बोद्धव्यः कारणेऽपि कार्य्यनिर्देशसम्भव- स्य घट कारणतन्तुदाहे घटोदग्ध इत्यादौ दृष्टत्वात्—मनस एकादशमेन्द्र- यत्वस्वीकारे इन्द्रियेभ्य इति पूर्वोक्तेनार्थपरतार्थत्वसम्भवाच्च ।

स्थितं चातुर्विध्यं सम्प्रज्ञातस्य ॥ अथ बुद्धिबोधात्मा पुरुषो निरोधावस्थे चेतसि किं बोधाभावान्न प्रकाशतेऽप्ययं वा गतो भवति जाड्यं वोपगतस्सन् वृत्त्या पुनश्चेत्यत इत्यत आह—। "स्वरूपेति"।

**स्वरूपावस्थितिर्द्रष्टु र्निरोधेऽपरिणामिनः।**
**व्युत्थाने वृत्तयोयद्वदात्मा तद्वद्विचेष्यते ॥ ४ ॥**

न तदानीं जाड्यं गतो भवति नवाऽप्ययंगतो भवति नापि न प्रकाशते नापि जाड्यं गतः पुनर्वृत्त्या चेत्यते किन्तु स्वरूपावस्थित एव भवति। ननु किन्तत्स्वरूपं यत्र-तस्यावस्थानमितितद्विशेषणत्वेन तत्स्वरूपं सूचयति—। "अपरिणामिन" इति । पुरुषोऽपरिणाम्यप्रतिसंक्रमोऽदर्शितविषयः शुद्धानन्तश्चेति चित्तन्तु तद्विपरीतं परिणामि दर्शितविषयमशुद्धं सान्तं चेति भावः । ननु निरोधे स्वरूपावस्थितोऽपि व्युत्थाने स्वरूपाच्च्युतो भवेदित्यत आह—। "व्युत्थान" इति । नहि पुरुषो व्युत्थाने स्वरूपात्प्रच्यवतेऽपितु वृत्तिसारूप्यमधिगच्छति दर्शितविषयत्वात्स्फटिकवद्यथा स्फटिको जपाकुसुम सामीप्याज्जपाकुसुमसारूप्यम्भजत एवं बुद्धियुतः पुरुषोऽपि भजते तदीयवृत्तिभिर्व्युत्थाने तत्सारूप्यं येन कर्त्ताहमस्मि भोक्ताऽहमस्मीत्यभिमन्यते—इति न स्वाभाविकं पुरुषस्य वृत्तिमत्त्वं यथोक्तं "तस्मिंश्चि-

दृष्यं पि स्फारे समस्ता वस्तुदृष्टय इमास्ताः प्रतिविम्बन्ति सरसीव तटद्रुमा" इति व्युत्थाने स्वरूपादप्रच्युत एव वृत्ति सारूप्यं लभते पुरुष इति सिद्धम् ॥ ननु वृत्तीनामानन्त्येन-तन्निरोधासम्भवात्कथं वृत्तिनिरोधोयोगः कथं वा पुरुषे-ण निरोद्धव्यास्ता इति नामनिर्देशपूर्वकं वृत्तीर्दर्शयति । "निद्रेति" ।

निद्रास्मृतिविपर्य्यासाः प्रमाणं सविकल्पकम् ।
वृत्तयः पञ्चतय्यस्युः क्लिष्टाक्लिष्टात्मिकाश्च ताः॥५॥

आसां लक्षणन्त्वग्रे वक्ष्यति पञ्चतय्य इत्यस्य च पञ्चप्रका-राइत्यर्थोनतु वृत्तिरूपोऽवयव्येकस्तदवयवा निद्रास्मृति विपर्य्ययप्रमाणविकल्पाः पञ्चेति, तथासति बहुवचना-नुपपत्तेः। न च पुरुषभेदेन वृत्ति रूपावयविनां भिन्नतया बहुवचनोपपत्तिरिति युक्तम्। पुरुषाणामानन्त्येन वृत्ती-नामनन्तत्वेपि परसमवेतानां तासां परस्य साक्षात्कारा-नुदयाद्वर्षसहस्रेण कदाचिदपिवा वृत्तिनिरोधानुत्पत्तेः। अथ माभूत्पुरुष भेदभिन्नानां परस मवेतानां वृत्तीनां निरोधस्स्वीय वृत्तेस्तुस्यादयं निरोध इति चेत्सत्यम् वृत्ति रूपावयविनामनेकत्वेपि स्वीयवृत्तिरूपावयविन एक-त्वेन वृत्तीनामानन्त्यानुपपत्त्या स्वीयानन्तवृत्तिनिरो-धमभिदधतो मूलकारस्य बहुवचनोपवर्णनासङ्गत्यापत्तेः किञ्च पञ्चतय्य इत्यत्रातयपोऽवयवार्थकत्वमङ्गीकृत्य पुनः

पुरुषभेदेन ’ बहुवचनोपपादनं न सम्यगधिककल्पनापत्ते-
रवयवार्थत्वस्वीकारेऽपि वृत्तिरूपैकावयविनः पञ्चावय-
वकल्पनेऽवयवान्तरप्रसक्त्याऽव्युदस्तेश्च नहि हस्तपादौ द्वौ
शरीरावयवावित्युक्तेऽवयवान्तरं नावगम्यत इति, एवं वृत्तेः
पञ्चावयवा इत्युक्तेऽपि नावयवान्तरप्रसक्त्याऽपेति वृत्तीना-
मानन्त्येन तदीयेयत्ताप्रतिपादनप्रवृत्तस्य “ क्लिष्टाऽक्लि-
ष्टाश्च पञ्चधा वृत्तय” इति भाष्यस्यापि वैयर्थ्यमासज्येतेति
नावयवपञ्चकवती वृत्तिरित्यर्थो युक्तोऽवयवानां प्रमाणा-
दीनां तत्तद्व्यक्तिभेदतोऽनन्ततया पञ्चत्वव्याहतेश्च जात्या
पञ्चत्वप्रतिपादने तु निरुक्त कल्पनागौरवमिति “ पञ्च-
तय्य” इत्यस्य पञ्चप्रकारा इत्येवयुक्तोऽर्थ एवञ्चवृत्त्यन्तरप्रसक्ता-
या अपि व्युदासस्सम्भवः प्रकाराणाञ्च स्वव्याप्यतत्तद्धर्मा-
श्रयतास्वरूपत्वात्—यथा दशविधा ब्राह्मणा इत्युदिते न
ब्राह्मणत्वरूपदशधर्मवतां ब्राह्मणानां बोधोदयस्तदाश्रित
ब्राह्मणत्वरूपजातेरैक्यात्-किन्तु ब्राह्मणत्वव्याप्यतत्तद्धर्म-
वतां दशब्राह्मणानामिति न ब्राह्मणान्तरप्रसक्तिरुत्पद्यते ।
एवमेव वृत्तयः पञ्चतय्य इत्यत्र वृत्तित्वव्याप्यतत्तद्धर्माश्रय
वृत्तिपञ्चकबोध उत्पद्यते नापि वृत्त्यन्तरसत्त्वप्रसक्तिरुदेतीति
पञ्चप्रकारा वृत्तय इत्यर्थो वरीयान्-अतएव“वृत्तयः पञ्चतय्यः
क्लिष्टाक्लिष्टा ” इति योगसूत्रार्थमुपवर्णयन् भाष्यकारः
“पञ्चधा वृत्तय”इति विवृतवान्न तु पञ्चावयववतीवृत्तिस्व-

पञ्चधाः प्रमाणादयः पञ्चेति । निरुद्धनिद्रादिवृत्तीनां च पञ्चत्वप्रतिपादनायाह । "क्लिष्टेति" । क्लेशजनिका-स्तामस्योवृत्तयः क्लिष्टाः । सुखप्रकाशादिजनिकास्सा-त्विक्यो वृत्तयोऽक्लिष्टाः । तच्चक्लिष्टा अक्लिष्टाभिर्निरोध्य-व्यास्ताः पुनः परवैराग्येणेति यद्यपि सर्वासामेव वृत्तीना-मस्ति क्लिष्टत्वं पुरुषम्प्रति, तथापि सात्त्विकीनामक्लिष्टत्वा-भिधानं तामसवृत्त्यपेक्षया, अथ राजस्यो वृत्तयः कुतो न निर्दिष्टास्तासामपि तामससात्त्विकवृत्तीनामिव पुरुष-म्प्रतिक्लिष्टत्वादिति चेत्तासामपि क्लिष्टाक्लिष्टात्मकत्वात् क्लिष्टांशस्य तामसवृत्तिष्वक्लिष्टांशस्य सात्त्विकवृत्तिष्वन्त-र्भावेण पृथगनुपादानात् । विवेकख्यातिरपि पुरुषं दुःखा करोति का कथा शान्तघोरमूढात्मकानां वृत्त्यन्तराणा-मतः क्लिष्टास्सर्वा अपि वृत्तय इति सिद्धं सर्वासां हेयत्वम् ॥५॥
प्रमाणादिपञ्चवृत्तिषु प्रमाणवृत्तेर्ज्येष्ठत्वेन श्रेष्ठत्वाद्विपर्यय विकल्पनिद्राविवृत्तीनामतिरिक्तत्ववादिनां विप्रतिपत्ते-श्चेत्यादौ प्रमाणवृत्तिं विभजते । "प्रत्यक्षादी"ति ।

प्रत्यक्षादिप्रभेदेन प्रमाणं त्रिविधं मतम् ।
विपर्य्ययात्मकं ज्ञानमतद्रूपप्रतिष्ठितम् ॥ ६ ॥

प्रमाणत्वमसंदिग्धाविपरीतानधिगतविषयकबोध रूपप्रमाकरणत्वम् । संशयविपर्य्ययस्मृतिकरणेष्वतिप्रसङ्ग वारणायोपात्तं बोधरूपप्रमांशे क्रमशोविशेषणत्रयम् ।

सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षं यद्यप्यस्ति प्रत्यक्षमपि सामान्यावगाहि तथापि तस्य विशेषावधारणप्रधानत्वमेवोपसर्जनत्वात् सामान्यस्यातिप्रत्यक्षस्यातदेतद्द्विविधं प्रत्यक्षमभ्यभिज्ञाऽभिज्ञाभेदात् संस्कारसन्निकर्षोभयजन्यं ज्ञानं प्रत्यभिज्ञा यथा सोऽयं देवदत्त इति । विषयसम्बद्धेन्द्रियजन्यं ज्ञानमभिज्ञा-यथायं घटोऽयं पट इत्यादि । लिङ्गज्ञानजन्यसामान्याध्यवसायोऽनुमानं तदपि द्विविधं वीतावीतभेदात् । तत्रान्वयमुखेन वर्त्तमानं विधायकं वीत द्विविधं पूर्ववत्सामान्यतोदृष्टञ्च पूर्वगृहीतव्यक्तिसामान्यविषयमनुमानं पूर्ववत्—यथा वह्नित्वसामान्यविषयमनुमानं तत्र वह्नित्वसामान्यव्यक्तिर्वह्निरूपा गृहीता प्रागप्यनुमितेर्महानसादाविति तद्विषयमनुमानं पूर्ववत् । पूर्वागृहीतव्यक्तिसामान्यविषयमनुमानं सामान्यतोदृष्टं यथा रूपादिज्ञानकरणत्वसामान्यविषयमनुमानं न तत्पूर्वमनुमितेः क्वचिदपि गृहीतं, छिदिक्रियाकरणवास्यादौ करणत्वसामान्यस्य पूर्वं गृहीतत्वेपि न रूपादिज्ञानकरणवृत्तीन्द्रियत्वरूपं सामान्यं पूर्वं गृहीतमिति पूर्वागृहीतव्यक्तिसामान्यविषयत्वादस्ति रूपादिज्ञानकरणत्वसामन्यविषयमनुमानं सामान्यतोदृष्टम् । निषेधमुखेन प्रवर्त्तमानंसन्निषेधकमवीतं तदेकविधं शेषवदित्युच्यते यथ पृथिव्यामितरभे-

दानुमानमवश्यमवयिनोरभेदानुमानं चेत्यनुमानम्। आगमस्त्वाप्तवचनं यथा गामानयशुक्लां दण्डेनेति लक्षितं त्रिविधं प्रमाणं, तीर्थकारान्तरगृहीतप्रमाणान्तराणां चिष्वेवान्तर्भावबोधनाय त्रिविधमित्युपन्यस्तंकारिकायाम्। विपर्य्ययस्वरूपमाह—। "विपर्य्यय"इति। तल्लक्षणं च बाध्यमानं ज्ञानं विपर्य्ययोयथा शुक्ताविदं रजतमिति प्रत्ययस्य च न प्रमाणं बाध्यमानत्वान्नहि बाध्यमानस्य प्रमाणता दृष्टा येन बाध्यमानस्यापि विपर्य्ययस्य स्यात्प्रमाणत्वं नहि प्रमाणोत्थघटादिविषयकबोधः केनापि ज्ञानेन बाध्यते यथा रजतविषयकबोधस्य विरोधिनोत्तरोत्पन्नेन नेदं रजतमिति ज्ञानेन तस्मान्न प्रमाणं विपर्य्ययः न च संशयस्येहानुक्तत्वादुपन्यस्य न्यूनतेतिवाच्यं संशयस्यातद्रूपप्रतिष्ठितत्वेन विपर्य्ययेऽन्तर्भावसम्भवाद् यद्यपि विकल्पोप्यतद्रूप प्रतिष्ठः पुरुषस्य चैतन्यस्वरूपतया चैतन्यासंसर्गित्वात्तेन च तद्व्यपदेशात्तथापि विपर्य्ययोत्तरं तद्विरोधिज्ञानस्यापाक्षरं प्रसिद्धत्वेन बाधव्यवहारसम्भवाद्विकल्पोत्तरं च तदभावादितिविकल्पोऽतद्रूपप्रतिष्ठोपि नविपर्य्यये प्रविष्टः सोयं विपर्य्यय एतन्मतेऽविद्येत्युच्यते "तमोऽनित्येषु नित्यत्वप्रत्ययः परिभाष्यत" इत्यपि वक्ष्यमाणत्वात्सांख्यमते तु नाविद्या विपर्य्ययस्ते विवेकापहस्यानादिवासनारूपस्याविद्यात्वस्वीकारादिति आख्यातोविपर्य्ययः॥ ८॥
विकल्पमाह—। "शब्दज्ञान" इति।

वस्तुशून्योविकल्पस्स्यात् शब्दज्ञानानुपातकः ।
अभावप्रत्ययालम्बा वृत्तिर्निद्रेति कीर्त्यते ॥ ७ ॥

यथा पुरुषस्य चैतन्यं प्रतिषिद्धवस्तुधर्म्मः पुरुष इत्यादि पुरुषस्य चैतन्यस्वरूपत्वेन वस्तुधर्म्मप्रतिषेधात्मकाभावस्य पुरुषानतिरिक्तत्वेन च नास्तितद्विषयीभूतः पुरुषचैतन्ययोर्वस्तुतोभेदोवस्तुधर्म्माभावपुरुषयोराधाराधेयभावश्चेति विकल्पोवस्तुशून्यः । अथ विकल्पस्य वस्तुशून्यत्वे विपर्य्ययेऽन्तर्भावः प्रसज्येत नहि विपर्य्ययोनामास्ति कश्चिदसद्भूतवस्त्ववगाही येन न तत्र विकल्पोऽन्तर्भवेत् यथाविपर्य्ययोऽसद्भूतरजताद्यवगाही तथाविकल्पोप्यसद्भूतपुरुषचैतन्यभेदाद्यवगाही न विकल्पोविपर्य्ययातिरिक्तः कश्चित् । यद्यपि शब्दज्ञानोभयजनकत्वं विकल्पलक्षणमुक्तं न वस्तुशून्यत्वं तथापि नार्थान्तरत्वं विकल्पस्य शाब्दबुद्धिजनकवन्मात्रसमवेतार्थज्ञाने तस्यो*पारोहसम्भवात् । अस्ति शाब्दबुद्धिजनकवन्मात्रसमवेतार्थज्ञानं शब्दज्ञानोभयजनकं नहि कश्चिदप्यर्थमनवगत्यबुबोधयिषितं वाक्यंप्रयुंक्ते कारणत्वाद्बोधयिषाधीनवाक्योच्चारणम्प्रति वाक्यार्थज्ञानस्य, तस्मादन्यार्थज्ञाने विकल्पस्यान्तर्भावसम्भवेन विकल्पोनार्थान्तरम् इतिचेद्-उच्यते नहि वस्तुशून्यत्वमात्रं शब्दज्ञानोभयजनकत्वमात्रं वा विकल्पत्वं सूत्रद्वयेन स्याद्विपर्य्यये

* अन्तर्भावः ।

शाब्दज्ञान जनकवक्तृसमवेतार्थज्ञाने या विकल्पस्योपारोहोऽपितु वस्तुशून्यत्वे सति शब्दज्ञानोभयजनकत्वं तथा च शाब्दज्ञानजनकवक्तृसमवेतार्थज्ञाने वस्तुशून्यत्वस्य विपर्य्यये शब्दज्ञानोभयजनकत्वस्य च विरहेण न विकल्पस्य शाब्दज्ञानजनकवक्तृसमवेतार्थज्ञान विपर्य्ययोरुपारोहः। नचायंरजतत्वेन शुक्तिं जानातीति यदा भ्रान्तेनोक्तं श्रोत्रा च तथा प्रतिपन्नं तत्र भ्रान्तवक्तृसमवेतविपर्य्ययस्यापि शब्दज्ञानोभयजनकत्वे सति वस्तुशून्यत्वेनेति तादृशविपर्य्ययेऽतिप्रसक्तिर्विकल्पलक्षणस्येतिवाच्यम्। विपर्य्ययमात्रस्य स्वविरोध्युत्तरज्ञानबाध्यत्वान्नायं विकल्पस्स्वविरोध्युत्तर ज्ञानबाध्यस्तत्रोत्तरत्र बाधव्यवहारादर्शनाद्विपर्य्ययेचोत्तरत्र बाधव्यवहारः सर्वानुभवसिद्ध इति विपर्य्ययतोवैलक्षण्यं विकल्पस्य,तथाचवस्तुशून्यत्वे सति स्वविरोध्युत्तरज्ञानाबाध्यत्वमितिविकल्पलक्षणस्यपर्य्यवसन्नत्वान्न दोषगन्धःकश्चित्। मूलोक्तशब्दज्ञानोभयजनकत्वं विकल्पस्य स्वरूपनिर्देश मात्रपरन्तु तल्लक्षणे प्रविष्टमधिकस्य वैयर्थ्यादिति॥ निद्रा स्वरूपमाह-। "अभावे"ति। जाग्रत्स्वप्नवृत्तीनां योऽभावस्तस्यप्रत्ययः कारणं यदज्ञानं तदालम्बा तद्विषयिणी वृत्तिर्निद्रेत्यर्थः। तल्लक्षणञ्च प्रबुद्धप्रत्यवमर्शहेतुत्वम्। सुखमहमस्वाप्सं दुःखमहमस्वाप्सं गाढंमूढोऽहमस्वाप्समिति सत्त्वाद्युद्रेकभेदभिन्नस्य त्रिविधप्रत्यवमर्शस्य प्रबोधे प्रबुद्धस्य

सम्भवात्प्रत्ययविशेषत्वं निद्रायाः, नह्ययं प्रबुद्धप्रत्यवमर्शोऽनुभवमन्तरेणोत्पत्तुमुत्सहतेऽनुभवहेतुकत्वात्प्रत्यवमर्शस्य तस्मादस्ति प्रत्ययविशेषत्वं निद्रायाः। नच प्रमाणादिवृत्तीनां समाधिप्रतिपक्षत्वान्निरोद्धव्यत्वेऽपि कथमेकाग्रतुल्याया निद्रायास्समाध्यप्रतिपक्षत्वेन निरोद्धव्यत्वं स्यादितिवाच्यम्। एकाग्रतुल्यत्वेऽपि निद्रायास्तामसत्वेनोभयसमाधिविरोधित्वात्-नहीयं निद्रैकाग्रतुल्याऽपि समाध्यप्रतिपक्षिणी यतोबहुलतमस्त्विनी तमश्च मोहरूपत्वेन समाधिविरोधीति निद्रापि प्रमाणादिवृत्तिवन्निरोद्धव्या ।७॥ स्मृतिःप्रमाणादिवृत्तिजनितसंस्कारजन्यतेतिप्रमाणादिवृत्त्यनन्तरं स्मृतिं दर्शयति-। "वृत्तिरि" ति।

वृत्तिस्स्मृतिरसम्प्रमोषोऽनुभूतविषयस्य च ।
रोधोऽभ्यासविरक्तिभ्यामेतासां योगिसम्मतः। ८॥

स्मृतिनिद्राविपर्यासा इतिपूर्वञ्च स्मृतेः प्रथमोपादानं पितृपितामहादय इत्यत्र पितृपदोपादानमिवस्मृतेर्वृत्त्यन्तरपूर्वकत्वप्रदर्शनायाऽत एवाधिगतविषयावगाहिज्ञानं स्मृतिरनधिगतविषयविषयकञ्च वृत्त्यन्तरमित्यपि निष्पन्नम् स्मृतिरूपंज्ञानं द्विविधमुत्पादितस्मर्त्तव्यमनुत्पादितस्मर्त्तव्यं चेति। तत्रानुत्पादितस्मर्त्तव्यं सा मेमातेत्यादिकंज्ञानम्। उत्पादितस्मर्त्तव्यञ्च स्वाप्निकगजाश्वरथादिविषयंज्ञानंनहि तत्रत्यगजाश्वरथादयोऽनुत्पादिता भान्ति तदानीमे-

वांस्यादित्वाद्गजाश्वरथादीनामित्युत्पादितमप्येतत् । नच स्वाप्निकगजाश्वरथादिविषयस्योत्पादितमप्येतज्ज्ञानस्य विपर्ययलक्षणोपपन्नत्वाद्विपर्ययत्वं युक्तमिति वाच्यम् । तत्रापि संस्कारजन्यत्वेन स्मृतित्वाभ्युपगमात्-स्मृतिरेवेदं स्वाप्निकं ज्ञानं नचेतत्रा ननुभूतगजाश्वादीनां भानमनुभूतदेशकालादीनामेव तत्र भानात् । नच तस्य स्मृतित्वे गजोयमश्वोयमिति न स्यात्प्रत्ययाकारस्तथाच स गजस्सोऽश्वइति साम्प्रतम् । तत्र तत्तांशप्रमोषसम्भवात्प्रमुष्टतत्ताकावीयं स्मृतिरतो नतत्तांशभानसम्भवः । यत्रपुनरप्रमुष्टतत्ताकास्मृतिर्भवत्येव तत्र स गजस्सोऽश्व इत्यपि भानं स्वाप्निकप्रत्ययस्थले च स्वप्नरूपदोषवशात्तत्तांशप्रमोषसम्भवेन स गजस्सोऽश्वइतिनैव भानमत एवायमिति सन्निकृष्टतावच्छेऽपीति स्मृतिरेवस्वाप्निकं ज्ञानं यदि च दोषस्योभयत्र हेतुत्वानुभवाद्विपर्यय एव स्वाप्निकः प्रत्यय इत्युच्येत तदा प्रमाणाभासे प्रमाणमिव विपर्ययस्वरूपेस्मृत्याभासे स्वाप्निके प्रत्ययेऽपि स्मृतिरितिव्यवहार उपपादनीय इति तत्तांशप्रमोषस्थलेऽपि स्मृतेरनुभूतविषयाधिकानवगाहित्वादनुभूतविषयाधिकानवगाहित्वं स्मृतित्वमित्यपि लक्षणं ज्ञेयं कारिकायां " वृत्तिस्स्मृतिरसम्प्रमोषोऽनुभूतविषयस्य चे" त्यभिधानं च वस्तुस्थितिप्रदर्शनार्थम प्रमुष्टतत्तांशकस्मृतिसाधारणलक्षणं वेति चिन्तनीयम् । वृत्ति

निरोधात्मकयोगसिद्धये निरोद्धव्यवृत्तीःप्रदर्श्य सम्प्रति तासां निरोधोपायमाह-।"रोधोऽभ्यासे"ति। नात्र वैराग्याभ्यासयोर्विकल्पोऽभिमतोऽपितु समुच्चय इति वैराग्येण वृत्तीनां वहिर्मुखताविच्छेदादभ्यासेनान्तर्मुखता सम्पाद नीयेति योगे तयोस्समुच्चयः। योगिसम्मत इत्यत्र विशिष्य योगिपदोपादानं च वृत्तीनां योगीतराऽनिरोद्धव्यत्वप्रदर्शनार्थम्। ८॥ अभ्यासमाह—।"अवृत्तिकस्ये"ति।

**अवृत्तिकस्यचित्तस्यप्रशान्तवाहिता, स्थितिः।**
**तदर्थकः प्रयत्नोयोऽभ्यसनं तत्प्रकीर्त्तितम्। ९॥**

अवृत्तिकस्येत्यस्य राजसतामसवृत्तिशून्यस्येत्यर्थो नतु-सर्ववृत्तिशून्यस्येति "प्रशान्तवाहिता स्थिति" रित्यनेन चित्तप्रशान्तवृत्तेरनन्तरमभिधानात्। प्रशान्तवाहिता च चित्तस्यसात्त्विकपरिणामप्रवाहेणावस्थानमन्यच्च स्पष्टम्। चित्तस्थित्यर्थं पौनः पुन्येन यत्नोऽभ्यासइति निर्गलितोऽर्थः। अथ राजसतामसवृत्तिशून्यत्वमेव चित्तस्यानुपपन्नं चित्तस्य राजसतामसवृत्तिस्वभावत्वेन तद्रहितत्वासम्भवान्नहि स्वभावस्यापायोदृष्टोनहिप्रततौष्ण्यस्वभावोवह्निः कदाचिदपि स्वभावादौष्ण्यात्प्रच्यवते नीरं वा स्वभावाच्छैत्यात्प्रच्यवते च लोहितात्स्फटिक इति न लोहितत्वस्वभावःस्फटिकश्चित्तन्तु नैवंवृत्तिस्वभावत्वात् तिस्वभावता चास्य त्रिगुण निर्मितत्वेन सर्वंसिद्धेति न स्वभावापायोभवितुमर्हति

तथाच साङ्ख्यसूत्रं "स्वभावस्यानपायित्वादननुष्ठानलक्षणमप्रामाण्यमितीतिचेन्नतरम्। नहि वयं स्वभावस्याप्ययं ब्रूमहे येन भवेत्त्वदुक्तशङ्कावकाशोऽपितु तिरोभावं स्वभावस्याप्ययासम्भवेपि शक्यते सोऽपि तिरोभवितुं यथा जलवृत्तिगैत्यस्य स्वरूपतोऽपायासम्भवेपि वह्निसंयोगादिना तिरोभवस्तथा चित्तसमवेतानां राजसतामसवृत्तीनामपितिरोभवो नानुपपन्न इतिसिद्धं राजसतामसवृत्तिशून्यत्वं चित्तस्य। वृत्तिशून्यत्वं च वृत्त्यन्ताभाववत्वं वृत्त्यन्ताभावश्चितानतिरिक्तोभावानामधिकरणात्मकत्वादिति। नचाभावानामधिकरणात्मकत्वे जलवृत्तिगन्धाभावस्यजलस्वरूपत्वं न जलस्य च घ्राणेन्द्रियेणग्रहणासम्भवात्तद्वृत्तिगन्धाभावस्यप्रत्यक्षत्वमाधाराधेयभावश्चनस्यादितिवाच्यम्। जलस्यापि घ्राणेन्द्रियेणग्रहणसम्भवात्—गन्धाभावानापन्नजलस्य घ्राणेन्द्रियाग्राह्यत्वेऽपि गन्धाभावापन्नजलस्यघ्राणग्राह्यत्वे चक्षत्यभावादन्यथा जलगन्धाभावप्रतीत्योरविशेषप्रसङ्गादाधाराधेयभावश्च वनेतिलका इतिवदुपपादनीय इतिसिद्धं वृत्त्यन्ताभावस्यचित्तस्वरूपत्वं। ९॥ निरुक्ताभ्यासस्यदार्ढ्योपायमाह—। "तत्युनरि"ति।

तत्पुनर्दीर्घकालेन सत्कारासेवितं मुहुः।
दृढभूमि विरक्तिस्तु विषयेषु वितृष्णता। १०॥

तदा पूर्वोक्ताभ्यासपरामर्शः। पुनरितुतस्यनन्तरत्वमव

गमयति । दीर्घकालेनेति दृढभूमीत्यनेनान्वयि । सुह-रिति नैरन्तर्य्यं बोधयति । तथाचोत्पत्त्यनन्तरं नैरन्तर्य्येण सत्कारासेवितं सदभ्यसनं दीर्घकालेन दृढभूमिर्भवतीत्यर्थः अयमभिसन्धिर्नैवंभूतमभ्यासं क्लेशोपरमितान्यथा दीर्घकालप्रवासेन तिरोभवत्यभ्यासइतिनोपरन्तव्यमभ्यासात् । दीर्घकालनैरन्तर्य्यसत्काराणामच न विकल्पोऽभिमतोऽपितुसमुच्चयोऽन्यथाकालदैर्घ्यनैरन्तर्य्याभ्यामन्तरेण सत्कारमात्रेणापि भवेद्दृढभूमिरभ्यासः । वैराग्यं दर्शयति । "विरक्तिरिति । यद्यपिविरक्तेर्हेत्विबहिर्मुखताविच्छेदहेतुतया प्रथमोपादानं युक्तमभ्याससाध्यत्त्वध्यन्तरसुखतासाधनस्यपश्चात्तथापितस्या दुस्साधत्वात्तद्विभागबाहुल्याद्वान्त उपादानमितिलक्षणमाह -। "विषयेष्वि"ति । दृष्टानुश्रविकविषयतृष्णारहिताभितितदर्थः । नचरोगग्रहग्रस्तस्यापिदृष्टानुश्रविकविषयवैतृष्णसम्भवात्तत्रातिप्रसक्तमेतदितिवाच्यम् । तस्यवैतृष्णासम्भवात्—नहिरोगग्रहग्रस्तोविषयविहृष्णोभवति रोगग्रहनिवृत्त्यनन्तरं तत्कालेवातस्येच्छासत्त्वाद्विषयवैतृष्णंच विषयेच्छाविरहस्तुतस्य नास्तीति न तत्रातिप्रसक्तिः । नचतथाप्यप्राप्तविषयस्य विषयस्पृहाऽसत्त्वात्तदवस्थैवाति प्रसक्तिरितिवक्तव्यम् । विषयसंयोगीपीत्यस्यापिलक्षणेनिवेशनीयत्वात् । नह्यप्राप्तविषयस्यविषयसंयोगीपिभवतिस्पृहाविरहोयथाविर-

त्तसेवति विषयसंयोगेऽपि विषयवैतृष्ण्यमिति विरक्तिचच-
यं पर्यवसन्नम् ।१०॥ यतमानादिभेदेन विरक्तेश्चातुर्विध्यं
ब्रवीति—। "तस्या" इति।

तस्यास्संज्ञाश्चतस्रस्तु यतमानादिभेदतः।
सा परा पुरुषख्यातेर्गुणेभ्योयावितृष्णता। ११॥

विरक्तेरित्यर्थः। यतमानादीत्यत्रादिनाव्यतिरेकैकेन्द्रिय
वशीकाराणां परिग्रहः। चित्तवर्त्तिभीरागादिभिः कषा-
यैरिन्द्रियाणि विषयेषु प्रवर्त्तन्ते माप्रवर्त्तिं षतविषयेभ्य-
न्द्रियाणीतितत्परिपाचनायांयत्नो यतमानसंज्ञा—पक्का-
पक्वेष्विन्द्रियगणेष्वपक्वेभ्यः पक्वानांव्यतिरेकीकरणंव्यति-
रेकसंज्ञा—सर्वाणीन्द्रियाणि पक्वाणीत्यध्यवसयेन्द्रियाणा
नैकरूपतासम्पादनं मेकेन्द्रियसंज्ञा—दिव्यादिव्यविषय
सम्प्रयोगेपि तत्र दोषपरिज्ञानादनाभोगात्मिकाचित्त-
वृत्तिर्वशीकारसंज्ञा यद्यपि वशीकारसंज्ञायामितरा-
सांचारितार्थ्य सम्भवस्तथापि तासांपृथक्कीर्त्तनं बुद्धिवैश-
द्यार्थमितिध्येयम् । यतमानादिभेदभिन्नापरवैराग्यं
लक्षयित्वा सम्प्रतिपुरुषदर्शनाभ्यासजनिततदौत्कृष्ट्यं
परेति संज्ञयाव्यपदिशति "सापरे" ति। पुरुषख्यातेः
पुरुषदर्शनात्। सा-विरक्तिः। उत्कृष्टासतीपरेत्युच्यते।
श्रौत्कृष्ट्यन्दर्शयति। "गुणेभ्य" इति। श्रयम्भावः दृ-
ष्टानुश्रविकविषयविलक्षणस्यख्यातावज्ञधर्म्मकेन्योगुणेभ्योस-

दा पुरुषदर्शनाद्वैराग्यमुत्पद्यते तदुत्पद्यमानं सत्वर-मिति व्यपदिश्यत इत्युक्तं परमपरभेदेन द्विविधं वैराग्यम् ॥ ११ ॥ पूर्वं "निर्बीजः प्रथमस्त्वेक" इत्यत्र सोऽसम्प्रज्ञातोनिर्बीजपदेन व्यपदिष्टस्सम्प्रति तल्लक्षण स्वरूपे निर्दिशति-। "विरामेति" ।

विराम प्रत्ययाभ्यास पूर्वोऽन्यश्शिष्टवासनः ।
विदेहाव्यक्त लीनानां समाधिर्भवकारणः । १२ ॥

अन्य इति लक्ष्य निर्देशः । सम्प्रज्ञातभिन्नोऽसम्प्रज्ञात इति तदर्थः । अन्य इत्यतः प्राक् परिशिष्टं लक्षणं शिष्ट वासन इतितत्स्वरूप निर्देशः । अवयवार्थस्तु विरमणंविरामो वृत्तीनामभावस्तस्य प्रत्ययः कारणं परवैराग्यं तस्याभ्यासः पौनः पुन्येनानुष्ठानं स पूर्वः कारणं यस्य सः पर वैराग्योपायकत्वम्मसम्प्रज्ञातत्वमिति पर्य्यवसन्नम् । भवति ह्यसम्प्रज्ञातो निर्वस्तुकः परवैराग्यजन्यो निर्वस्तुकत्वात्पर वैराग्यस्य, तस्मादुक्तः परवैराग्यासम्प्रज्ञातयोः कार्य्यकारणभावः । शिष्टवासनः-संस्कारशेष इत्यर्थः । नचाग्रे "संस्कारस्यापि संरोधे निर्बीजश्चास्य सम्मत" इत्यनेन सकल संस्कार निरोधे सत्यसम्प्रज्ञात स्वरूपस्य वक्ष्यमाणत्वात् पूर्वापरग्रन्थविरोध इति, शङ्क्यम् अवस्था भेदाश्रयणेन विरोधाभावान्-नायं पूर्वापर विरोधोभवितुमर्हति असम्प्रज्ञातपूर्वावस्थायां संस्काराणां शेषेऽपि चर-

मावस्थायां सुतरां तदभावाञ्चेत्तदाऽयं विरोधः पूर्वापर ग्रन्थस्याभ्युपगच्छामश्चेत्सकलावस्थायां संस्कार शेषत्वं तन्निरोधं वेति न तद्विरोधः। स खल्वयं द्विविधस्समाधिर-विद्याकारणकःश्रद्धाद्युपाय पूर्वकश्चेति तत्राविद्याहेतुको विदेह प्रकृतिलयानां समाधिरित्याह-। "विदेहे" ति करणेषु लीनास्सन्तो देहमन्तरेण य उपभुञ्जते ते विदेहाः। अव्यक्तमेवात्मतयाभिमत्य तस्मिन् लीना य उपभुञ्जते तेऽव्यक्त लीनाः। भवत्यस्मिन्निति भवोऽविद्या सकारणं यस्य स इत्यर्थः भवकारणमिति पाठे भवस्य संसारस्य कारणं हेतुरित्यर्थः। १२ ॥ अन्येषां योगिनां श्रद्धाद्योपाय पूर्वकस्समाधिरित्याह। "इतरेषा" मिति।

इतरेषां समाधिःस्याच्छ्रद्धाद्योपाय पूर्वकः।
आसन्नस्तीव्रवेगानां समाधिस्तत्फलन्तथा। १३॥

इतरेषां विदेह प्रकृतिलयव्यतिरिक्त योगिनाम्-। श्रद्धाद्योपायाः। श्रद्धावीर्यस्मृति समाधिप्रज्ञारूपाः। पूर्वं कारणानि यस्य स इत्यर्थः। नचात्रश्रद्धाद्युपायानां विकल्पोभवेत्तदा विकल्पः श्रद्धाद्युपायानां कुर्युश्चेत्ते परस्परमनपेक्षमाणा अपि समाधिं नहि श्रद्धाद्योपाया अन्योन्यनिरपेक्षा स्सन्तःसमाधिंकर्त्तुं क्षमा अन्यथाश्रद्धाद्येकैकोपायानुष्ठातृणामपि समापत्तिप्रसङ्गः। नहि श्रद्धाद्येकैकोपायानुष्ठातारस्समाहित चेतसो भवन्तोपिसमा-

धिमन्तो दृश्यन्ते तस्मान्नविकल्पः श्रद्धाद्युपायानां समापत्तावपितु समुच्चयस्तथाहि—श्रद्धातो वीर्यं तस्मान्नस्मृतिः स्मृतेश्च समाधि प्रज्ञा । ततश्चते सर्वे संभूय जनयन्ति समाधिमिति समुच्चयः श्रद्धाद्युपायानां समाधौ । नच वाच्यं भूतेन्द्रिय प्रकृतिचिन्तका अपि भवन्ति श्रद्धावन्तोनह्यश्रद्दधाना श्चिन्तायां प्रवर्त्तन्ते यदिनतेश्रद्दध्युर्नचिन्तायां प्रवर्त्तेरन्नित्यस्तितत्समापत्तेरपि श्रद्धाद्युपायपूर्वकत्वमिति, चेतस्सम्प्रसादरूप श्रद्धायाअभ्युपगमात् । नहिवयमिच्छामात्रं विश्वासमात्रं वा श्रद्धां ब्रूमहे येनेच्छादिमात्रेण भूताद्यात्माभिमानिनां भूतादि चिन्तकानां भूतादिसमाप्तेरपिस्याच्छ्रद्धाद्युपाय पूर्वकत्वं किन्तु चेतस्सम्प्रसादं सचाभिरुचिःस्साचभूतादिचिन्ताजनित सुखेच्छा परिहारेणात्मसुखेच्छा नचैतादृश सम्प्रसादोभूतेन्द्रिय प्रकृतिचिन्तकानां भूताद्यात्माभिमानित्वात्तेषामसम्प्रदोहि स व्यामोहजनकत्वादिति नभूतादिचिन्तकानां समापत्तिः श्रद्धाद्युपायपूर्वका श्रद्धाकृतनिर्वचना वीर्य्यमङ्गानुष्ठानोत्साहः । स्मृतिरनुष्ठिताङ्गाविस्मरणम् । समाधि प्रज्ञा विवेक ज्ञानम् । अथ न श्रद्धाद्युपायानामुपायत्वं सम्यक् प्रतीयतेभवेयुर्यदि श्रद्धादयोयोगोपायास्तदासर्वेषामेव श्रद्धाद्युपायानुष्ठातॄणां भवेत्समानासिद्धि र्नहि सर्वेसमान

सिद्धयोभवन्ति भवन्ति चकेचिदासन्नसिद्धयोऽपरेचासन्नतर सिद्धयोऽन्ये चासन्नतमसिद्धय इति सिद्धिवैषम्य दर्शनान्नश्रद्धादीनामुपायत्वमित्यत आह-। "आसन" इति। वेग-उपायानुष्ठानप्रयास्। उपायानुष्ठान शैघ्रयवता मासन्नसमाधिर्भवतीत्यर्थः। अयमभिसन्धिः। आसन्नासन्नतरासन्नतमत्वादिसत्वभेदभिन्नास्त्रिविधा योगिनो मृदुमध्यतीव्रभेदेन नवविधा भवन्ति तद्यथा-मृद्वासन्नवान् १ मध्यासन्नवान्-२ तीव्रासन्नवान् ३ मृद्वासन्नतरवान् ४ मध्यासन्नतरवान् ५ तीव्रासन्नतरवान् ६ मृद्वासन्नतमवान् ७ मध्यासन्नतमवान् ८ तीव्रासन्नतमवान् ९ मृदुत्वादयोविशेषायोपायगतमृदुत्वादि प्रयोज्या इत्युपायवैचित्र्यात्सिद्धं सिद्धि वैचित्र्यमिति श्रद्धाद्युपायकत्वेपि न सर्वेषां समानासिद्धिः। १२॥ समाधेरन्यविशेषान् सूचयितुमाह। "मृद्वि" ति।

मृदु मध्याधिमात्रत्वाद्विशेषस्स्यात्ततोपिच।
ईश्वरप्रणिधानाद्वाऽऽसन्ने समाधितत्फले। १४॥

मृदुमध्याधिमात्रभेदेनोपायभेदात्तदनुष्ठातृयोगिनामपि भेदोभवतीति तात्पर्यार्थः। तथाहि मृदुमृद्वासन्नवान् १ मध्यमृद्वासन्नवान् २ अधिमात्रमृद्वासन्नवान् ३ मृदुमध्यासन्नवान् ४ मध्यमध्यासन्नवान् ५ अधिमात्रमध्यासन्नवान् ६ मृद्वधिमात्रासन्नवान् ७ मध्याधिमात्रासन्नवा-

न् ८ अधिमात्राधिमात्रासन्नवान् ९ मृदुमृद्वासन्नतरवान् १० मध्यमृद्वासन्नतरवान् ११ अधिमात्र मृद्वासन्नतरवान् १२ मृदुमध्यासन्नतरवान् १३ मध्यमध्यासन्नतरवान् १४ अधिमात्र मध्यासन्नतरवान् १५ मृद्वधिमात्रासन्नतरवान् १६ मध्याधिमात्रासन्नतरवान् १७ अधिमात्राधि मात्राधिमात्रासन्नतरवान् १८ मृदुमृद्वासन्नतमवान् २० अधिमात्र मृद्वासन्नतमवान् २१ मृदुमध्यासन्नतमवान् २२ मध्यमध्यासन्नतमवान् २३ अधिमात्र मध्यासन्नतमवान् २४ मृद्वधिमात्रासन्नतमवान् २५ मध्याधिमात्रासन्नतमवान् २६ अधिमात्राधि मात्रासन्नतमवान् २७ इति भेदेन सप्तविंशतिधा योगिनो भवन्तीत्युक्तः श्रद्धाद्युपाय पूर्वकःसमाधिः। उपायान्तर माह-। "ईश्वरे"ति। ईश्वरप्रणिधानात् ईश्वरभक्ति विशेषात्। समाधिस्तत्फलञ्च भवतीत्यर्थः। प्रणिधाप्यमानः परमेश्वर इदमस्य भवत्विति सङ्कल्पमात्रेणानुगृह्णाति न व्यापारान्तरेणेति ततस्समाधिस्तत्फलं च क्षिप्रं योगिनोजायतइति तात्पर्य्यम्।१४॥ अथ कोयं प्रधान पुरुषेभ्योऽतिरिक्त ईश्वरोयत्प्रणिधानात् समाधितत्फलयोरासन्नत्वमुच्यत इत्यतआह-। "क्लेशे"ति॥

क्लेशकर्म्मविपाकाद्यैर्वासनाभिस्तथैव च।
अपरामृष्टमेवाङ्गः पुरुषं हीश्वरं बुधाः।१५॥

क्लेशा अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च वक्ष्यमाणाः कर्माणि विहितप्रतिषिद्धरूपाणि ज्योतिष्टोम ब्रह्महत्यादीनि। विपाकाः कर्मफलानि जात्यायुर्भोगाः। वासनाधर्माधर्मसंस्काराः। एभिरपरामृष्टं रहितं पुरुष विशेषं योगविद ईश्वरमेवाहुरित्यर्थः। तल्लक्षणंच त्रैकालिकबन्धशून्यत्वं बन्धशून्यत्वमात्रोक्तौ मुक्तप्रकृति लयेष्वतिव्याप्तिरितित्रैकालिकत्वं बन्धविशेषणं तथाच मुक्तेषु भूतबन्धस्य प्रकृतिलयेषु च भाविबन्धस्य सत्त्वान्न तत्रातिव्याप्तिरीश्वरस्य तु त्रैकालिकबन्धशून्यत्वात्तत्र लक्षण समन्वयः। तेहि नत्रैकालिकबन्धविरहिणो भवितुमर्हन्ति क्लेशादि संसर्गत्वान्नहि प्रागनन्तरं सम्प्रति वा क्लेशाद्यैः परामृष्टास्त्रैकालिक बन्ध शून्याः क्लेशादि परामर्शस्यैव बन्धत्वादिति मुक्तानां भूतोबन्धः प्रकृति लयानांच भाव्योऽस्मदादीनांतु त्रैकालिक एवेति न बन्ध विरहिणो भवन्तीश्वर व्यतिरिक्ता बद्धाश्च मुक्ताः नचेश्वरव्यतिरिक्त पुरुषाणामप्यसङ्गत्वश्रुतेर्नास्ति कदाचिदपिक्लेशादि परामर्शरूपोबन्ध इति साम्प्रतम्। असङ्गिन्यपि पुरुषे बन्धव्यपदेश सम्भवात्-यथा योद्धृपुरुष गतजयपराजयौ स्वामिनि व्यपदिश्येते तथा मनोगतोपि तत्स्वामिनि पुरुषे व्यपदिश्यते बन्धः। युक्तश्चैतादृश एव बन्धस्तस्य निवृत्ति सम्भवान्नहि स्वाभाविकोबन्धः पुरुषे

भवितुमर्हत्यस्यतित्वत्यसम्भवान्नहि स्वभावात्कश्चिदप- सरति नहि वह्निस्वभावमौष्ण्यं जहाति यदि स्यात्पुरु- षाणां स्वाभाविको बन्धस्तर्हि कश्चिदपि न मुच्येतेतिनस्वा भाविकोबन्धः। अथ यस्य नास्ति स्वाभाविकोबन्धस्त- स्किम्प्रतिच्चेत्रमेकोऽनेकोवेति वक्तव्यं नैकोभवितुमर्हति प्रतिक्षेत्रं तस्मिन्नेकस्मिन्नभ्युपगम्यमाने एकस्यान्धत्वे भवेयुस्सर्वेऽन्धा बधिरत्वे च बधिराः म्रियमाणेचैकस्मिन् सर्वे मृताभवेयुर्जायमाने च जाताइति नैतद् दृश्यते तस्मान्नै कः प्रतिक्षेत्रं पुरुष इत्यनेकत्वपक्षएव निर्दिष्टत्वात्परि शिष्टः। नच वाच्यमेक एव पुरुषः प्रतिक्षेत्रं] सुपाधिभेदे नापि नानाव्यवहार सम्भवादिति उपाधिभेदस्य नाना व्यवहाराप्रयोजकत्वान्नहि किरीट कुण्डलाद्युपाधि- भेदेन देवदत्तो नानाभवति नानाचेत्स्यात्किरीटाद्युपाधि विगमे नायं देवदत्तइत्यपिव्यवहारस्स्यान्नायं व्यवहारस्स- म्भवति तस्मान्नोपाधिभेदेन पुरुष नानात्वम्। नच प्रधा- नादि पञ्चविंशति तत्वानि प्राचीनसम्मतानि कथं षड्विं- शः क्लेशकर्माशयैरपरामृष्टः परमेश्वर उच्यत इति, सं- साराङ्गारेषु तप्यमानानां प्राणभृतामनुग्रहार्थं षड्विंश तत्त्वस्यपरमेश्वरस्यस्वीकारात्-नहि संसाराङ्गारेषु भृशमु- पतप्यमानाः प्राणभृतः परमेश्वरानुग्रहमन्तरेणद्वान्ता पान्वयासेद्धुं क्षमा येनानुग्राहकतया परमेश्वरोन स्वी-

क्लिश्यते इति स्वेच्छया निर्माणकायमधिष्ठाय लौकिक वैदिक सम्प्रदायप्रवर्त्तकः संसाराङ्गारपरितप्यमान प्राणिवर्गा-नुग्राहकश्चषड्विंशः परमेश्वरः। नच पुष्कर पलाशवन्नि-र्लेपस्य पुरुषस्य तापएवनास्ति कथं तदनुग्राहकतयापर-मेश्वरोऽभ्युपगम्यतेति, तापकस्य रजसस्सत्वमेवतप्यं बुद्ध्यात्मनापरिणमत इतिसत्वे तप्यमाने तमोवशेनतदभेद ग्राहिणः पुरुषस्यापितापसम्भवात्तथाचोक्तं भगवतापत-ञ्जलिना “अपरिणामिनीहिभोक्तृशक्तिरप्रतिसंक्रमाच परिणामिन्यर्थे प्रतिसंक्रान्तेवतद्वृत्तिमनुभवती” ति तथाच शुद्धोपि पुरुषो बौद्धंप्रत्ययमनुपश्यन्नतदात्मापि तदात्मकइव भासते इति परितप्यमान पुरुषस्यपरमेश्वर प्रणिधानेनसत्त्वपुरुषान्यताख्याता वनुपप्लवायां जातायां-मविद्यादयः पञ्चक्लेशास्समूलकाषंकषिताभवन्ति कुश-लाकुशलाश्चकर्माशयास्समूलघातंहता भवन्ति ततश्चपुरुष-स्यपुष्करपलाशवन्निर्लेपस्य बौद्धप्रत्ययानुकारिताम्परि-त्यज्यस्वरूपेण कैवल्यात्मनावस्थानमित्यावश्यकः प्रणिधाना-नुग्राहकः षड्विंशः परमेश्वरः। षड्विंशतितत्त्वानिच प्रकृतिर्महदहङ्कारौ। एकादशेन्द्रियाणि पञ्चतन्मात्राणि पञ्चमहाभूतान्याकाशादीनि पुरुषपरमेश्वरौचेतिलक्षितः परमेश्वरः। १५ ॥ एवमीश्वरस्वरूपमभिधाय तत्रानुमानं दर्शयति। “अतीतानागते ”ति।

अतीतानागतज्ञानं वर्द्धमानं क्रमाद्धपि ।
स्यान्निरतिशयं यत्र ससर्वज्ञ उदाहृतः । १६ ॥

अल्पं वह्निति क्रमाद्वर्द्धमानमिदमतीतानागतविषयकं ज्ञानं यस्मिन्निरतिशयं समाप्ततारतम्यं भवेत्स सर्वज्ञ ईश्वर उदाहृतः । नच वाच्यं वर्त्तमान विषयक ज्ञाना ग्रहणान्नतस्य तारतम्यं कुत्रचित्समाप्नोतीति, स्थूल ग्राहि वर्त्तमान विषयक ज्ञानस्य तारतम्यस्य सुप्रसिद्धत्वेन तस्यैहकक्षतोऽनिर्वचनात् । यदिचातीन्द्रिय विषयकस्य वर्त्तमानज्ञानस्य नास्तिस्थूलग्राहित्वं तद्विषयातीन्द्रिय पदार्थस्य स्थूलत्वाभावादिति तदग्रहणात्तदवस्थो दोष इत्युच्यते, तदातीतानागतत्वस्योपलक्षणत्वेन वर्त्तमानस्यापि ग्रहणान्नदोष स्तथातीतानागतवर्त्तमानविषयाणां क्रमतस्समुच्चयेन चाग्रहणं यस्मिन्समाप्नोति ससर्वज्ञईश्वरइतिस्थितम् । तथाचानुमानं ज्ञानतारतम्यं क्वचिल्लब्धसमाप्तिकं सातिशयत्वात्-परिमाणतारतम्यवत् । यथापरिमाणतारतम्यं वर्द्धमानंसद्गगनादौविश्राम्यति तद्वत्त्रवर्द्धमानं ज्ञानतरम्यं विश्रान्तं सोऽस्मदादीनां बाधादीश्वरस्सर्वज्ञोभवितु मर्हति । इतरविशेषबाध निश्चयलाघव प्रतिसन्धानवशेन व्यापकतानवच्छेदकी भूतधर्म्मावच्छिन्नविधेयताकानुमितेः सर्वसिद्धत्वादिति सर्वज्ञेश्वर सिद्धिः । १६ ॥ अथैतेनानुमानेना

ष्टाङ्गयोग प्राप्तैश्वर्य्यः कश्चिद्योगी हिरण्यगर्भो वासैत्स्य तीत्यत आह। "स" इति।

स कालेनानवच्छेदात्पूर्वेषान्तु गुरुर्मतः।
वाचकः प्रणवस्तस्य तदर्थं भावनं जपः॥ १७

नह्यष्टाङ्गयोगप्राप्तैश्वर्य्योयोगी हिरण्यगर्भोवाऽनेनानुमानेन सेद्धुमर्हति हिरण्यगर्भादीनामपि तदनुग्रहैश्वर्य्यप्राप्तिश्रुतेर्नहि तस्यास्ति कस्यचिदनुग्रहैश्वर्य्य प्राप्तिस्स्वतस्सिद्धज्ञानैश्वर्य्यबलसम्पन्नत्वात्साम्यातिशयातीतत्वाच्च तथाच श्रुतिः "न तत्र कार्य्यं करणं च विद्यते-नतत्समश्चाभ्यधिकश्च दृश्यते। परास्य शक्तिर्विविधैवश्रूयते स्वाभाविकी ज्ञान बलक्रियाचे" ति स्मृतिश्च—"पितासि लोकस्य चराचरस्य त्वमस्य पूज्यस गुरुर्गरीयान्। न त्वत्समोस्त्यभ्यधिकः कुतोन्यो लोकत्रयेप्यप्रतिमस्वभावे" ति। स एव कालेनानवच्छेदात् सर्वज्ञस्स्वतस्सिद्धैश्वर्य्यो नहि स केनचिदप्यवच्छिद्यते कालेनदिशावस्तुनावा, अवच्छिद्यन्ते हि हिरण्यगर्भादयः कालादिनेति न कालादवच्छिन्नास्सर्वज्ञेश्वराभवितु मर्हन्ति। अतएव सहिरण्य गर्भादीनां गुरुर्यद्यवच्छिद्येतामुमपिकालस्तर्हि सर्वज्ञोऽपि सन् कथं हिरण्यगर्भादीनांभवेन्नगुरिति न हिरण्यगर्भादयस्सर्वज्ञास्स्वतस्सिद्धैश्वर्य्याबायेषु ज्ञानतारतम्य विश्रान्तिरुस्वीक्रियेत निरुक्तानुमानेनेति चतुर

चेतस एव चेतसि चातुर्य्येण विचारयन्त्विति चतुरस्त्रम् । तद्वाचकं शब्दमाह-।"वाचक" इति । तस्यैवसर्वज्ञेश्वरस्य वाचकोयोऽयमोङ्कारस्तेनाहूतोभगवान्सत्वरं प्रणिधान मात्रेणैवानुगृह्णाति प्रणिध्यायिनं तस्मादोङ्कारजप एव तदर्थस्येश्वरस्य भावनम् ।१७॥ सर्वज्ञसर्वेश्वरकाला-द्यनवच्छिन्नपरमगुरोरीश्वरस्यैव वाचकः प्रणवशब्दइत्यभिधाय सम्प्रति निरुक्तेश्वरप्रणिधानस्यान्तरायापगमप्रत्यक् चेतनाधिगमोपायत्वं निर्दिशति-।"अभावश्चे" ति ।

अभावश्चान्तरायाणां स्वरूपाधिगमोऽप्यतः ।

चोऽत्रावधारणे भिन्नक्रमश्च-"अत" इत्यस्यानन्तर-मेवान्वेति-ईश्वरप्रणिधानादेवव्याधि प्रभृतीनामन्तराया-णां निवृत्तिस्स्वस्यात्मनः प्राप्तिश्च सम्भवतीति तदर्थः । नचो-पायान्तरादिति भावः । नचोपायान्तरमन्तरायानुच्छेत्तु-मीष्टेयेन नेश्वरप्रणिधानमपेक्ष्येतउपायान्तरस्यतन्निव-र्त्तकत्वेपि नतन्निवृत्ता अन्तरायायोगोत्पत्तिक्षमा उपा-यान्तरनिवृत्तानामन्तरायाणांपुनरप्युत्पादसम्भवान्नहीश्वर प्रणिधान निवृत्ता अन्तरायास्समुत्सहन्ते पुनरुत्पत्तुमिती श्वरप्रणिधानमेवान्तरायापायक्षमन्नच वाच्यमीश्वर प्रणि-धान निवृत्तानामप्यन्तरायाणां स्यान्नामपुनरुत्पाद इति, योगाङ्गानुष्ठान जनित विवेक ख्याति प्रणष्टमूलकत्वेन तेषां पुनरुत्पादासम्भवान्नहि प्रणष्टमूलको वृक्षउत्पद्यतेऽति

प्रसङ्गात्तस्मान्नोपायान्तर प्रणष्टान्तरायवत्प्रणिधान प्रणष्टा न्तरायाणामुत्पादसम्भवइति युक्तं नचोपायान्तर प्रणाश्या- न्तरायाणामपि योगाङ्गानुष्ठानजनितविवेक ख्यात्य- ग्निना दाहसम्भवात्तेषामपि पुनरनुत्पत्ति समानैवेति वाच्यम्। स्वीकृतत्वात्—योगांगानुष्ठान जनित विवेक ख्यात्यग्निदग्ध मूलकत्वेऽपि तेषामीश्वर प्रणिधानसम- नन्तर योगांगानुष्ठानजनितविवेक ख्यात्यग्निदग्धमूल कत्वेन सततमुपकारकत्वात्—नहि यथेश्वर प्रणिधान समनन्तर योगाङ्गानुष्ठान जनित विवेकख्यात्यग्निदग्ध बीजभावानामन्तरायाणामुपकारकत्वं तथेतरोपाय प्रण- ष्टानामिति युक्त मीश्वर प्रणिधानस्यैव समूलव्याधिप्रभृ- त्यन्तरायनाशकत्वम्। ईश्वर प्रणिधानस्य स्वरूपाधि- गमहेतुतामाह-। "स्वरूपे" ति अतः—अस्मादीश्वर प्रणिधानात्। स्वरूपस्य प्रत्यक् चेतनस्य अधिगमः— साक्षात्कारोऽपि योगवित्सम्मत इत्यर्थः। अथ विरुद्ध- मिदमुच्यतईश्वर प्रणिधानात्स्वरूपाधिगमोभवति प्रणि धानाधिगमयोरेक विषयकत्व दर्शनान्नह्यन्यविषयक प्रणिधानमन्याधिगमाय भवत्यन्यथासत्यान्मैत्र विषय प्रणि धानेन चैत्राधिगमस्तस्मान्नेश्वर प्रणिधानस्य स्वरूपाधि- गमोपायत्वम्। नचमाभूदीश्वर प्रणिधानं स्वरूपाधिगमे उपाय उपमानेन तज्ज्ञानं भविष्यत्येव यथैवेश्वरः

पुरुष: शुद्ध: प्रबुद्ध: केवलोऽनुपसर्गस्तथायमप्यात्मेति वाच्यम्-उपमानस्यैवाऽसिद्धत्वेन पुरुषोपमितेरसम्भवात् । किन्तदुपमानं येन पुरुषावगम उच्यते किं सादृश्यप्रत्यक्षं किं वा सादृश्यानुभव: नाद्यस्तत्र प्रत्यक्षयोरपि तत्प्रत्यक्षत्वेनोपमितित्वापत्ते: । द्वितीयश्चेत्—किं सादृश्यप्रत्यक्षमुपमानमुत सादृश्यानुमिति राहोस्वित्सादृश्योपमिति: सादृश्यबोधो वा तत्राद्यो कीदृशं तद्यदुपमानत्वेनाभिमतं चक्षुरादीन्द्रियसंसर्गिणि गवये गोसादृश्यप्रत्यक्षमितिचेत्तर्हि गवयेगो सादृश्यं गवि च गवय सादृश्यं भिन्नमभिन्नं वा भिन्नमितिचेत्—नतत्सादृश्यम्भवितुमर्हति भूयसामवयवानां समानसंसर्ग एव सादृश्यं स चेद्गोगवययोर्भिन्न: कथं सादृश्यं भवेदिति सादृश्यसम्पत्तये समान एव वक्तव्यस्समानश्चेत्कथं तद्विषयं ज्ञानमुत्पद्यमानं भिन्नं भवेदितियद्गोगवययोस्सादृश्य प्रत्यक्षं तदेकमेव वाच्यं तथाच तादृशप्रत्यक्षानन्तरं गवयोयमितिवद्गोरप्युपमितिस्स्यान्नहितादृश सादृश्य प्रत्यक्षानन्तरं गवयोयमितिवद्गोरप्युपमिति: कस्यचिद्भिमता येन गवयोपमितिरपि स्वीक्रियेत तादृश्य प्रत्यक्षस्योपमिति कारणत्वाङ्गीकारेच गवयोपमिति वद्गोरुपमितिरप्यावश्यकीति न गवये चक्षुस्संनिकृष्टे गोसादृश्य प्रत्यक्षमुपमानम् ॥ नापि सादृश्यानुमितिरुपमानम् ।

सा च गोसदृशो गवय इत्याकारैव वाच्या न सोपमानं भवितुमर्हति । तत्र समत्वचयोरप्युपमितित्व प्रसङ्गात् । किञ्च गवयमपश्यतोऽपि पुरुषस्य गोसादृश्यानुमितिसम्भवेन तदनन्तरमप्युपमितिरस्या न्नैतद्भवितुमर्हति गोसदृश्यानुमितेर्व्याप्ति ग्रहपूर्वकत्वे नेतितदनन्तरमेव गोसादृशो गवय इति ज्ञान सम्भवात् तामनुमित्यात्मकेनोपमानेन । नाप्युपमितिरुपमानम् । तस्यास्स्वात्मकोपमितिप्रतिकरणत्वे आत्माश्रयः । उभयोरन्योन्यप्रतिकरणत्वेऽन्योन्याश्रयः करणभूतोपमितेरप्युपमित्यात्मककरणत्वाङ्गीकारे तस्याप्युपमित्यन्तरं वक्तव्यमित्यनवस्था प्रसज्येत नच करण भूतोपमितेर्न करणमुपमित्यन्तर मन्यदिष्यत इत्यपि शक्यं वक्तुं तथासत्युपमितेरुपमितेःस करणकत्व व्याघातादिति नोपमिति रप्युपमानम् ॥ नापिसादृश्य बोधस्योपमानं तस्य च शक्तपदजन्यतया गोसदृशो गवयपदवाच्य इति शक्तिग्रहकाल एव गवयबोधसम्भवादितिवैयर्थ्यं सादृश्यबोधस्योपमिति करणत्वेनेति न तद्बोधोऽप्युपमानमित्युपमानासिद्धिः कथमुपमानेन पुरुषाधिगम सम्भवः अत्रोच्यते नान्यतरमात्रविषयकं चिन्तनमन्यतरमात्र साक्षात्कारायभवतीति ब्रूमहे किन्तु सामानार्थानुचिन्तनं समनार्थान्तर साक्षात्कारायेति, एकशास्त्राभ्यास इव सदृशार्थं शास्त्रान्तरबोधायेतीश्वर प्रणिधानं भवति

पुरुषसाक्षात्काराय्येति निरुक्तौ नभवत्ययं दोषश्चेत्स्याता मीश्वर पुरुषावत्यन्तविधर्म्मिणौ भवेत्तदायंदोषो नह्यत्यन्त विधर्म्मिणावीश्वर पुरुषौ सम्मतौ कस्यापि, अत्यन्त विधर्म्मिणोरन्यतरार्थानु चिन्तनन्तु न तदितरस्य साक्षात्कारायालमिति सर्वसम्मतम् । तस्मात्सिद्धमीश्वर प्रणिधानस्य पुरुषाधिगमहेतुत्वम् । नच वाच्य मस्ति चैत्रमैत्रयोरपि पुरुषत्वेन सादृश्यमिति चैत्र प्रणिधानेनापि मैत्रसाक्षात्कारस्यादिति, तादृशधर्म्मेण सादृश्यमभिदधतः प्रमेयत्वादिना घटादेरपि पुरुष सादृश्यसम्भवाद् घट प्रणिधानेनापि पुरुषाधिगमः प्राप्नोतीति सादृश्यमात्रस्य तत्राकिञ्चित्करत्वात् । नच सादृश्यमात्रस्याकिञ्चित्करत्वे कथं समानशास्त्राभ्यास न्यायेनेश्वर प्रणिधानस्य प्रत्यक्चेतनाधिगमहेतुत्व सम्भव इतिवाच्यम् । स्वसमानजातीयस्योत्कृष्ट प्रणिधानाभ्यासयोरेव समानजातीयान्तरावगमकत्वात् ॥ नहि चैत्रो मैत्र समान जातीयस्सन्नपि मैत्रादुत्कृष्टोभवितुमर्हति दुःखित्वादिना साम्यात्तस्मान्नचैत्रप्रणिधान मीश्वर प्रणिधानमिव मैत्राधिगमं निर्वर्त्तयितुमीष्टे । ईश्वरप्रणिधानं चेष्टे प्रत्यक् चेतनमधिगमयितुमीश्वरस्य पुरुषसमान जातीयत्वेसतिदुःखत्वादितिमातदुत्कर्षात् । एवं स्वोत्कृष्ट स्वसमान जातीयस्य शास्त्राभ्यासस्यैव समान जातीय

शास्त्रान्तर बोधकत्वं सिद्धं दृश्यते खलुचैवं लोके स्वोत्-कृष्ट स्वसमान जातीयशास्त्राभ्यासतत्परा एव शक्नुवन्ति समान जातीयशास्त्रान्तरमवगन्तुमितिसम्यगुक्तमीश्वर प्रणिधानस्य प्रत्यक्चेतनाधिगमहेतुत्वं नच वाच्यमीश्वर प्रणिधानेनैव मुक्तं विषयप्रणिधानेनापि स्वरूपाधिगमप्र-सङ्ग स्तेषामपीश्वरत्वं स्यात्स्वस्योत्कृष्टत्वात्। इष्टापत्तिः। इष्टंचैतदस्माकं यथेश्वर प्रणिधानस्य स्वरूपाधि गमहेतु-त्वमेव मेवमुक्त प्रणिधानस्यापीयान् परोऽनयोर्विशेष ईश्वर प्रणिधानस्यसाक्षात्स्वरूपाधिगमकत्वमुक्तं प्रणिधानस्य तु मनःस्थितिरूपद्वारेणेवेत्यमुमेवार्थमभिप्रयन् सूत्रयां-चकार भगवान्पतञ्जलिरपि वीतराग विषयं वा चित्त-मिति। ईश्वरप्रणिधानस्य स्वरूपाधिगमकत्वमभिधाय समाधेरन्तरायान्दर्शयति—"व्याधिरिति"—

व्याधिस्त्यान प्रमादाश्च संशयोभ्रान्ति दर्शनम् ।१७॥
आलस्याविरतीचैवं भूम्यलाभानवस्थिती ।
नवैतेचित्तविक्षेपा योगिनां योगबाधकाः ।१८॥

तत्र व्याधिर्नाम धातुवैषम्यनिबन्धनमस्वास्थ्यम्। तेषां साम्ये स्वास्थ्यदर्शनात्—साम्यञ्चात्र शरीरधारणक्षमत्व रूपमभिमत मन्यथा शरीरधारणस्यैवा सम्भवात्स्पष्ट-श्चैतच्चर्कादि निबन्धेष्विति विशेषस्तत्रैवविज्ञेयः। स्त्यानं चित्तस्याकर्मण्यता-समाधिसाधनेष्वौदासीन्यं प्रमादः।

संशयःउभयकोटिस्पृगाज्ञानम्-भ्रान्तिदर्शनं विपर्ययः—कायचित्तयोर्योगाङ्ग विषयप्रवृत्ति प्रतिबन्धकस्तमः परिश्रमविशेषजालस्यम् अविरतिर्विषयेष्वासङ्गः—भूम्यलाभः--समाधि भूमीनां मधुमत्यादीनामप्राप्तिः। अनवस्थितिस्तेतस्समाधि भूमिष्वनवस्थानमित्येतेनवविक्षेपास्तदुबाधनार्थं प्रणवादिपवित्रमन्त्राणां जपःकर्त्तव्यः यतस्तेन न योगबाधकाभवेयुः ॥ १७ ॥ सम्प्रतिविक्षेपसहोदरान्दर्शयति—। "प्रश्वासेति"—।

प्रश्वासश्वासदुःखाश्च दौर्मनस्यांगवेपथुः ।
भवन्ति क्षिप्तचित्तस्यविक्षेपसोदभवास्त्विमे । १९ ॥

कोष्ठगतवातस्य बहिर्निःसरणं प्रश्वासः । तस्यैव पुनराचमनं श्वासः। अननुकूलवेदनीयं दुःखं सुखप्रतिद्वन्द्वि भावविशेषोयेन सन्तप्ताः प्राणभृतस्तद्विनाशाय प्रयतन्ते। तच्चत्रिविधमाध्यात्मिकाधिभौतिकाधिदैविक भेदात्। तत्राधिदैविकं नाम यक्षराक्षसग्रहाद्यावेशजनितं पशुपक्षिसरीसृपादेर अन्यमाधिभौतिकं तदेतद्विविधं दुःखं बाह्योपाय ...निवर्त्यभवति। आध्यात्मिकं दुःखन्त्वान्तरोपाय साध्यम्—आन्तरोपायास्च वातपित्त श्लेष्म काम क्रोध लोभ मोह भयेर्ष्या विषाद संशयाः । काम इच्छा विषयाप्राप्तौ चित्त सन्तापः क्रोधः विषयलाभेपि चेतसोऽसन्तोषोलोभः । विपर्ययज्ञानं ज्ञानव्यतिरेको

वा मोहः। विषयविनिवर्तनानिबन्धनर्यं तसोऽनवस्थानं भयः। परीक्षणासहनमीर्षा। अविज्ञात हेतुकश्चिन्ता वि-षादो विषादः। संशयः पूर्वमुक्तः। एतदान्तरोपायसाध्य-माध्यात्मिकं दुःखं द्विविधं शारीरं मानसं चेति शारीरं वातादि वैषम्यनिबन्धनं मानसं कामेर्षादिजनितं यद्यपि सर्वं दुःखं मानसमेव तथापि मनोमात्र जन्याजन्य-त्वाभ्यां तद्विभागः। यद्वा अध्यात्मचक्षुरादिकमिन्द्रियम् अधिभूतं तदधिष्ठानं गोलकम्—अधिदैवं तदभिमानि-न्योदेवताः। एतद्वैकल्यनिबन्धनं दुःखमाध्यात्मिकादि भेदेन त्रिविधमुच्यते। इच्छाभिघाताच्चेतसः क्षोभोदौर्मन-स्यम्। अङ्ग वेपथुरङ्गेषु कम्पा-यतश्च ते प्रश्वासादयः विक्षेप सहोदरा अतोविक्षिप्तचित्तस्यैवेते भवन्ति न समाहित चित्तस्येति विक्षेपबाधनार्थं योगिना प्रयतितव्यम्॥१८॥ अभ्यास विषयोपसंहार व्याजेन समाधिप्रतिपक्ष विक्षेप प्रतिक्षेपोपायमाह-। "विक्षेपेति"—।

विक्षेप प्रतिषेधार्थ मेकतत्त्वावलम्बनम्।
चित्तमेवाभ्यसेद्योगी सौहार्द्यादींश्च भावयेत्।२०॥

यथा चैते विक्षेपा न स्युरतो योगिनैकस्मिन्नभिमतेत-त्त्वे चित्तमभ्यसितव्यम्। विक्षेप प्रतिक्षेपोपायमुपन्यस्य चित्त प्रसादोपायमभिधत्ते-। "सौहार्द्यादींश्चेति"। आदि-शब्दव्यवहितोत्तरान्तकारिकापठिताः करुणामुदितोपेक्षा

ग्रहीतव्याः ॥२०॥ भावनाक्रमन्दर्शयति-। सौहार्दीमिति ।

सौहार्दीं सुखयुक्तेषु करुणां दुःखितेष्वपि ।
मुदितां पुण्यशीलेषूपेक्षामपुण्यकर्मसु । २१ ॥

स्पष्टम् ॥२१॥ ननु भावनायाश्चित्तवृत्तिविशेषरूपत्वेन स्वविरोधिवृत्त्यनुदयपर्य्यन्तं कथञ्चित्प्रसादजनकत्वेऽपि स्वनिरोधानन्तरन्तदजनकत्वात्कथ प्रसादोपायत्वमित्यत आह-। "एवमिति" ।

एवम्भावयतस्तस्य धर्मः शुक्लोऽभिजायते ।
प्रसीदति ततश्चित्तमेकाग्रमवतिष्ठते । २२ ॥

अयमाशयः । वृत्तिविशेषरूपाया भावनाया अस्थिरत्वेऽपि तज्जनितस्य प्रसादजनकस्यातिशयविशेषस्य चरमफलपर्य्यन्तं स्थायित्वाभ्युपगमेन तद्द्वारा भावनाया अपि प्रसादहेतुत्वसम्भवादिति भावनायां प्रसादोपायत्व सङ्गतम् ॥ २२ ॥ प्रकारान्तरेण चित्तस्थितिमाह-। साधयेदिति-।

साधयेत्प्राणवायोर्वा प्रच्छर्दनविधारणे ।
स्याद्विषयवतीजाता प्रवृत्तिस्स्थिति कारणं । २३ ॥

कोष्ठगतस्य वायोः प्रयत्नविशेषाद्बहिष्करणं प्रच्छर्दनं-कोष्ठवायोः प्रयत्नविशेषान्निरोधो विधारणं प्राणायाम इत्यर्थः । नच प्राणस्य शरीरान्तस्सञ्चारिवायुविशेषरूपत्वेन तत्प्रच्छर्दनविधारणयोः कथं मनस्स्थितिसम्पा-

हेतुत्वं मनसाऽसम्बद्धत्वात्प्राणस्य, नह्यसम्बद्धः प्रवृत्तये स्थितये वा कल्पते तस्मात्प्राणप्रच्छर्दनविधारणयोर्मनःस्थितिनिबन्धनत्वमिति वाच्यम्---अन्तःकरणवृत्तित्वाभ्युपगमात्—नहि वयं प्राणं वायुविशेषं मन्यामहे येन तत्प्रच्छर्दनविधारणयोर्मनःस्थितिनिबन्धकत्वमनुपपन्नं स्यादपि तु चित्तसामान्यवृत्तित्वाभिधानात्तद्भावे चाभावात्-तथाच प्राणस्य चित्तवृत्तिरूपत्वेन तत्र सम्बद्धत्वात्तत्प्रच्छर्दनविधारणाभ्यां मनसः स्थितिर्निरूढा सर्वैरपि स्थानभेदात्प्राणादिव्यपदेशभाग्भवति । तत्र प्राणो नासाग्रहृन्नाभिपादाङ्गुष्ठवृत्तिः । अपानः कृकाटिका पृष्ठपादपायूपस्थपार्श्ववृत्तिः । समानो हृन्नाभिसर्वसन्धिवृत्तिः । उदानो हृत्कण्ठतालुमूर्धभ्रूमध्यवृत्तिः व्यानस्त्वग्वृत्तिः । तथाचोक्तम् “हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः । उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः । नचावैकैकस्थाननिर्देशात्पर्यं क्व प्राणादीनामनेकस्थानं कथमनुचितमिति-विशेषस्थानाभिप्रायेणैकैकस्थानसङ्कीर्तनात्—नच प्राणवायोश्चित्तसामान्यवृत्तित्वमप्रवृद्धानभिमतत्वेन त्वयैव कल्पितं सामान्यवृत्तित्वमिति वाच्यम्—वृद्धैरप्येवं प्रणयनात्, तथाचोक्तमीश्वरकृष्णैः । “स्वालक्षण्यं वृत्तित्रयस्यैषा भवत्यसामान्या ॥ सामान्यकरणवृत्तिः प्राणाद्यो वायवः पञ्च ”इति विषयवती वा प्रवृत्तिरुत्पन्ना

मनसस्स्थितिनिबन्धनी भवन्ति विषया रूपरसगन्धस्पर्शशब्दा विषयतयाविद्यन्ते यस्यास्साप्रज्ञष्टा वृत्तिः प्रवृत्तिस्साक्षात्कारो नतु यत्न विशेष इत्यर्थः तथाहि-तालुनि धारयतोऽस्य योदिव्यरूप साक्षात्कारस्स रूप प्रवृत्तिः। रसनाग्रे धारयतोऽस्य योदिव्य रससाक्षात्कारस्सरसप्रवृत्तिः। नासिकाग्रे धारयतोऽस्य योदिव्यगन्ध साक्षात्कारस्सगन्धप्रवृत्तिः। रसनामध्ये धारयतोऽस्ययो दिव्यस्पर्शसाक्षात्कारस्सस्पर्श प्रवृत्तिः। रसनामूलेधारयतोऽस्ययोदिव्य शब्दसाक्षात्कारस्सशब्दप्रवृत्तिः। एतेन मणिचन्द्रादि विषयाः प्रवृत्तयोप्युपलक्षिता बोध्याः। नन्वितासां प्रवृत्तीनां रूपादिविषय विषयकत्वेन कथं मनस्स्थितिनिबन्धनीत्वं रूपादि विषयक प्रवृत्तीनां मनः प्रवर्त्तकत्वदर्शनादिति चेन्न। अदिव्यरूपादिविषयावगाहि वृत्तीनां प्रवर्त्तकत्वेपि धारणादि जनितदिव्य रूपादि विषयक प्रवृत्तीनां प्रवर्त्तकत्वानभ्युपगमात् प्रत्युतैतासां स्थालीपुलाकन्यायेन शास्त्राचार्योपदिष्टेष्वपवर्गादि सुसूक्ष्मपदार्थेषु प्रत्यायकत्वेन संशय विधमन द्वारा समाधिप्रज्ञायां द्वारीभूतत्वात्—। भवेत्तदैतासां प्रवृत्तीनां प्रवर्तकत्वं चेन्नस्युरिमास्समाधिप्रज्ञायां द्वारीभूता इति नैतासां प्रवर्त्तकत्वम्॥ २२॥

हृदय पुण्डरीके धारयतोऽस्य योगिनोभास्वर बुद्धि सत्त्व-

स्थिति वैशारद्यादया प्रवृत्तिरुत्पद्यते साविशोका भास्वर बुद्धि सत्त्वविषयत्वात्सैव ज्योतिष्मत्युच्यते सापि मनसः स्थिति निबध्नतीत्याह—। "ज्योतिष्मतीति"।

ज्योतिष्मती विशोका वा चित्तं वा वीत रागगम्।
स्वप्ननिद्रा वलम्बं वा ध्यायेद्वा तत्त्वमीप्सितम् ॥२४॥

चित्तस्थितेरुपायान्तरमाह-। "चित्तमित्यादिना— वीतो निवृत्तोरागस्सक्तिर्येषां ते वीतरागा वामदेवशुकाद- यस्तद्गतं तद्विषयंकथन्ते मुक्ताः केनोपायेन मुक्तास्तद्वन्मयाप्य- भ्यस्तव्यमित्येवरूपं परित्यक्त विषयाभिलाषं वाचित्तं स्थि- तिनिबन्धनं भवति वाह्यसकलवृत्ति परित्यागेन चेतसोऽ- भ्यन्तरवाहिता स्वप्नः। निद्रा प्रसिद्धा, तदालम्बनं वा चित्तं स्थितिनिबन्धनं भवति। यथाऽभिमते वाह्ये चन्द्रादावा- भ्यन्तरे वा नाडीचक्रादौ ध्यायमाने चेतःस्थितिपदं लभते। ननु "विक्षेपप्रतिषेधार्थमेकतत्त्वावलम्बनमि" त्यने- न प्रागपि यथाभिमतैकतत्त्वावलम्बनस्योक्तत्वेनात्रापि पुनस्तत्कीर्त्तनात्पौनरुक्त्यमितिचेन्न पूर्वमेकतत्त्वावल- म्बनस्यविक्षेपप्रतिक्षेपार्थकतयोक्तत्वेनेह ·चित्तस्थैर्यहेतु- त्वाभिधानान्नपौनरुक्त्यम्—यद्वा तत्र विक्षेप प्रतिक्षेपार्थ- मेकस्मिन्नीश्वरतत्त्व—एवभावनाऽत्र तु यस्मिन्कस्मिंश्च- वाह्येऽभ्यन्तरेवेति पूर्वंवैलक्षण्यं विविधविषयवासना विचित्रितचेतसा प्रथमत ईश्वर विषय प्रणिधानासम्भवेन

यथाभिमते वस्तुनि स्थैर्य्याभ्यास उक्तः-अभ्यस्तस्थैर्य्येण तु चेतसा सुकरमीश्वरप्रणिधानं ततश्च सुकरस्समाधिलाभोऽप्यस्मिन्विषयानुध्यानस्य समाधिलाभानुपायत्वादितिभावः। ॥ २४ ॥ भावनफलं दर्शयति—। "परमाण्विति"—।

परमाणुमहत्त्वान्तोवशीकारोऽस्य जायते ॥

चित्तस्थैर्य्यंभावयतोऽस्य योगिनस्सूक्ष्मभावनद्वारेण परमाणुपर्य्यन्तो वशीकारः, स्थूलभावन द्वारेणच परममहत्त्वान्तो वशीकारो जायते सोयं वशीकारः परापरभेदेन द्विविधः स्थूलसूक्ष्मोभयभावनद्वारेण परमाणु पर्य्यन्ते सूक्ष्मे—आकाशादिपर्य्यन्ते स्थूले च चेतसोऽप्रतिघातस्सपरो वशीकारः। एकस्यां स्थूलकोटौसूक्ष्मकोटौवा चेतसोऽप्रतिघातस्सोऽपरोवशीकारः। यद्वा स्थूलभावनद्वारेण स्वचेतस आकाशादिस्थूलेऽप्रतिघातस्सोऽपरोवशीकारः। सूक्ष्म भावन द्वारेण परमाणुपर्य्यन्ते सूक्ष्मेयोऽप्रतिघातश्चेतसस्सपरो वशीकारः। तद्वशीकारादभ्यस्तं योगिनश्चित्तं न पुनरभ्यासमपेक्षते येनयोगाभ्यासार्थं पुनरभ्यासोपाये प्रयतेतेत्युक्तोवशीकारः। नन्वेवंस्थितं चित्तं किमाकारभवतीत्याह—। "अभिजात" इति।

अभिजातो मणिर्यद्वच्चित्तं तद्वदिहेष्यते। २५ ॥
क्षीणवृत्ति ग्रहीत्रादि रूपभेदेन भासते।

क्षीणाः प्रत्यस्तमिता नष्टा वृत्तयो प्रत्यया ज्ञानानि यस्य

चेतस्तत्। अयं भावः। यथा स्वच्छः स्फटिकोमणिर्नील पीतरक्तः कुसुमोपाधिवशान्नीलाद्याकारेण भासते एवं क्षीणवृत्ति चित्तमपि ग्रहीतरि पुरुषे ग्रहणे-इन्द्रियादौ—ग्राह्येषु भूतेषु समापन्नं तत्तदाकारेणभासते तद्यथा ग्राह्यसमापन्नं ग्राह्याकारेण भासते ग्रहणसमापन्नं ग्रहणाकारम्भवति ग्रहीतरिसमापन्नञ्च ग्रहीत्राकारम्भवतीति॥ पूर्वं सबीजसमाधेर्वितर्क विचारानन्दास्मितानुगतभेदेन चातुर्विध्यं प्रदर्शितं सम्प्रति तस्यास्सवितर्क निर्वितर्क सविचार निर्विचारभेदांश्चतुरोदर्शयति। सङ्कीर्णेति—

सङ्कीर्णा यैव शब्दार्थ ज्ञानविकल्पकैस्तु च। २६॥
सवितर्कास्समापत्ति रर्थमात्रावभासिका।
परा स्वरूपशून्येव स्मरणपरिशोधने। २७॥

विभक्तानां गवादि शब्दार्थज्ञानानां योऽविभागप्रत्ययःसविकल्पः। विकल्पएव विकल्पकइति स्वार्थेकन् प्रत्ययः। ज्ञानं बुद्धिवृत्तिः। अर्थो जात्यादिः। शब्दस्तद्वाचकंपदम्। तथाचायमर्थः शब्दार्थज्ञानानांयेविकल्पकाः शब्देऽर्थविकल्पकः। अर्थेच शब्द विकल्पकः। शब्दे ज्ञान विकल्पकः। ज्ञानेच शब्दविकल्पकः। ज्ञाने चशब्द विकल्पकः। अर्थे ज्ञानविकल्पकः। ज्ञाने चार्थविकल्पक इति एभिर्विकल्पकैर्स्सह सङ्कीर्णा सम्भिन्ना मिलिता यासमापत्तिस्समाधिःसा सवितर्केत्यर्थः ॥ २६ ॥

गौरितिशब्दः। गौरित्यर्थः। गौरितिज्ञानम्,—इतिविसञ्ज गोपदत्व गोपदवाच्यत्व गोविषयकत्वधर्माणां गोशब्द गवार्थगोज्ञानानां योऽयं गौरित्येकाकारेण सङ्कीर्णग्रहोक्ष्यां समाधौ विद्यते सा सवितर्का समापत्तिरितिभावः। स्मरणस्य—शब्दार्थ ज्ञानाविभाग प्रत्ययस्य—परिशोधने—निवृत्तौ—स्वरूपशून्या-स्वे—शब्दज्ञाने—तयो रूपे—वाचकत्व सविषयकत्व धर्म्मौ ताभ्यां शून्या—रहिता अर्थमात्रस्य—ग्राह्यपदार्थमात्रस्य—अवभासिका-प्रकाशिकेव या समापत्तिः सापरा निर्वितर्कैत्यर्थः। यस्यां समापत्तौ शब्दार्थज्ञानानां विकल्प प्रत्ययो न भवति किन्तु शब्दः शब्दत्वेन रूपेण अर्थोऽर्थत्वेनरूपेण ज्ञानं ज्ञानत्वेनरूपेण भासते सा निर्वितर्का समापत्तिरिति भावः। यद्यपि निर्विकल्प समाधौ शब्दार्थ ज्ञानानां सर्वेषां स्वधर्म्म पुरस्कारेण भानं त थापि समाधीनामर्थेष्वेव प्रकृतत्वेनार्थमात्रावभासिकेत्यत्रमात्र पदोपादानम् ॥२७॥ एतत्तुल्यन्यायेन सविचार निर्विचारे निर्दिशति। "सविचारेति"।—

सविचारा सुसूक्ष्मार्था निर्विचारा तथैवच ।
व्याख्याताऽलिङ्ग पर्य्यन्ता सूक्ष्मविषयता मता ।२८॥

तच्चाचेत्थमक्षर योजना-एतया सवितर्कया निर्वितर्कया. च सविचारानिर्विचाराच सुसूक्ष्मविषया समापत्तिर्व्याख्यातैव सुसूक्ष्मा अर्था विषयावस्यास्सा पूर्वोक्ताया—

सवितर्काया निर्वितर्कायाश्च स्थूलविषयतापि दर्शिता भवति विशिष्याच सुसूक्ष्मार्थत्वुपादानात्—तथा चाचाय्यैवं विभागः। यस्यां समापत्तौ सूक्ष्मा विषयाः शब्दज्ञान विकल्पानुविद्धाः सन्ति सा सविचारा यस्यां चैते न विकल्पानुविद्धाः सानिर्विचारा॥ अथ के सुसूक्ष्मार्था ये सविचार निर्विचारयोर्विषया इत्यत आह-। "अलिङ्गेति"—। न क्वचिल्लीयते वा न किञ्चिल्लिङ्गति गमयतीत्यलिङ्गं प्रधानमित्यर्थस्तस्य क्वचिदपि लयाभावायुक्तं तस्यैवालिङ्गत्वम्—नन्वस्तिप्रधानमप्यात्मनोलिङ्गमिति न किञ्चिल्लिङ्गति गमयतीति व्युत्पत्त्या कथमलिङ्गं प्रधानमितिचेन्न—अत्रालिङ्गप्रतियोगिनि लिङ्गपदार्थेऽन्वयिकारणानुमापकत्वस्य विवक्षितत्वात्तथाच प्रधानं नान्वयिकारणानुमापकमकारणकत्वात्पुरुषस्तु न तदन्वयिकारणमिति तदनुमापकत्वेपि प्रधानस्य नालिङ्गत्वक्षतिरिति तत्पर्यन्ता सूक्ष्मविषयताऽभिमतार्थः। तन्मात्राहङ्कार महत्प्रकृतयः सूक्ष्मविषया इतिभावस्तत्रापि गन्धतन्मात्रस्यरसतन्मात्रं सूक्ष्मोविषयस्तस्य रूपतन्मात्रं तस्य स्पर्शतन्मात्रं तस्य शब्दतन्मात्रमेषां चाहङ्कारस्तस्य महान् महतः प्रकृतिरित्युत्तरोत्तर क्रमेण सूक्ष्म विषयता-नचास्ति प्रधानादुत्तरः पुरुषस्तस्य कथनसूक्ष्म विषयतेति पुरुषस्यापि सूक्ष्मत्वेन "अलिङ्ग, पर्य्यन्ता सूक्ष्मविषयतेत्यभिधानमयुक्तमिति वाच्यम्—त-

त्वान्तरोपादानस्यैवाच सूक्ष्मविषयत्वेनाभिमतत्वात्—नहि वयमुत्तरत्वमात्रेणैव सूक्ष्मविषयतां ब्रूमीयेन पुरुषस्यापि प्रकृतेरुत्तरत्वमात्रेण सूक्ष्मविषयताऽऽपद्येत किन्तु तत्त्वान्तरोपादानत्वेनेति पुरुषस्योपादानत्वाभावान्न सूक्ष्मत्वं तस्मात्तन्मात्रेभ्यः प्रधानपर्य्यन्तैव सूक्ष्मविषयताऽस्थिता तेषामेवतत्त्वान्तरोपादनत्वात्—तद्यथा—तन्मात्राणि भूतानामाकाशादीनां तेषाञ्चाहङ्कारस्तस्य च महान्—तस्य च प्रधानमिति—एतेन मूर्तेन्द्रियादीनां सूक्ष्मविषयता पराकृता द्रष्टव्या तेषां तत्त्वान्तरानुपादानात् उक्तसमापत्तीनां प्रकृते प्रयोजनमाह—। "ताएवेति"—।

ताएवाङ्कस्मबीजं च समाधिं योगवित्तमाः।

ताः पूर्वोक्तास्तत्तत्सवितर्कं निर्वितर्कं सविचार निर्वचार समापत्तयः बीजेन क्लेशेन सह वाबीजेनावद्येन सह वर्त्तंते सबीजस्सम्प्रज्ञातसमाधिस्तमित्यर्थः। पूर्वोक्तास्सवितर्कादि समापत्तयस्सम्प्रज्ञात समाधिरेवेति पूर्वार्द्धाभिप्रायः।

तिसृणां सवितर्कनिर्बितर्कं सविचाराणां निर्विचार फलकत्वान्निर्वचारायाः फलमाह—। "निर्वचारेति"।

निर्वाचार समापत्तेर्वैशद्यं जायते यदि । २९ ॥
तदाऽध्यात्मप्रसादस्स्यात्प्रज्ञा तत्र ऋतम्भरा।

यदि निर्विचारायास्समापत्तेः प्रकृष्टाभ्यासवशाद्वैश-द्यं नैर्मल्यं जायते तदाऽस्य योगिनोऽध्यात्मप्रसादो भवतीत्यर्थः। वैशद्यञ्च रजस्तमोभ्यामनभिभूत बुद्धिस-त्त्वस्य स्थितौ दार्ढ्यम्—। समुत्पन्नेऽध्यात्मप्रसादे चित्त-वैशद्य फलं दर्शयति—"प्रज्ञेति"—। प्रज्ञा यथाभूतवस्तु-वगाही स्फुटालोकः। ऋतं सत्यं बिभर्त्ति कदाचिदपि न विपर्ययादिभ्य आच्छाद्यतेया सा ऋतम्भरा—तस्मा-दृतम्भरात्मकस्फुटालोकात्सर्वं यथावत्पश्यन् योगी प्रकृष्टं योगमाप्नोति। ऋतम्भरप्रज्ञायां श्रुतानुमानाभ्यां वैलक्षण्यं दर्शयति—। "श्रुतेति"—।

श्रुतानुमान बुद्धिभ्यामितरार्थावलम्बिनी। ३०॥
विशेषार्थतया तज्जस्संस्कारोऽन्य प्रबन्धकः।
संस्कारस्यापि संरोधे निर्बीज प्रशास्त सम्मतः।३१॥

इति श्री कृष्णयशस्वि शास्त्रि निर्मिते योगमकरन्दे

समाध्याख्यः प्रथमः पादः।

———०*०—*—०*०———

श्रुतं च—अनुमानंचेति श्रुतानुमाने ताभ्यां जनिते बुद्धी श्रुतानुमान बुद्धी ताभ्यामित्यर्थः । इयम् ऋतम्भरा प्रज्ञा इतरार्थस्य विशेषस्यापि अवलम्बिनी विषयिणी यतस्ते बुद्धी सामान्यमात्र विषये—इयं च निर्विचार वैशारद्य समुपिता ताभ्यां विलक्षणा विशेषविषयत्वात्—अनया हि सूक्ष्मव्यवहित विप्रकृष्ट विषयाःस्फुटमवभासन्ते-इतरार्थावलम्बिनीत्यनेन श्रुतानुमान प्रज्ञाभ्यामस्या विशेष दर्शनेऽपि वक्ष्यमाण कारिकास्थ विशेषार्था तयेति पदेन प्रत्यक्षादपि ऋतम्भरप्रज्ञाया विशेषोदर्शितः । यतः प्रत्यक्ष मपि सूक्ष्म व्यवहित विप्रकृष्टवस्तूनिनावगाहते-इयंच तदवगाहिनीति प्रत्यक्षादपि विलक्षणा । ऋतम्भर प्रज्ञायाः फलमाह—। तज्ज इति—। तस्या ऋतम्भरप्रज्ञया जनितः संस्कारः । अन्यान् व्युत्थान संस्कारान् प्रतिबध्ना—तीति भावः विशेषार्थतयेत्यस्यार्थस्य पूर्वमुक्तत्वेऽपि—अत्रापि तदन्वयेनैवमर्थोऽवगन्तव्यः । ऋतम्भर प्रज्ञाया अन्यप्रज्ञाभ्यो विशेष विषयत्वेन तज्जनित एव संस्कारो व्युत्थान संस्कारप्रतिबन्धको नत्वन्यप्रज्ञाजनितस्तथा-च ऋतम्भर प्रज्ञाजनित संस्कारेण सति व्युत्थानसंस्कार प्रतिबन्धे न पुनर्व्युत्थान प्रज्ञासंस्काराणा मुत्पत्तिः । इदानीं मुख्यमसम्प्रज्ञात समाधिमाह—।"संस्कारस्येति"। ननु ऋतम्भर प्रज्ञाजनित संस्कारस्य व्युत्थान संस्कार

निरोधकत्वेऽपि सम्प्रज्ञात संस्काराणामनिवर्तकत्वात्कथं निर्बीजस्समाधिरिति चेन्न । असम्प्रज्ञातापेक्षया सम्प्रज्ञातस्यापि व्युत्थान रूपत्वेन तत्संस्कार निरोधस्याप्यावश्यकत्वात् । अथ ऋतम्भर प्रज्ञाजनित संस्कारस्य केन निरोधइति चेन्न असम्प्रज्ञातोत्पत्त्यैव तन्नाश सम्भवात् चरम शब्दवत् स्वोत्तर वृत्तित्व विशिष्टस्वस्यैव वा स्वनाशकत्वादिति सर्वसंस्कार निरोधे भवति निर्बीज स्समाधिर्यत्र पुरुषः शुद्धस्वस्वरूपेऽवतिष्ठते नच पूर्वमसम्प्रज्ञात समाधेःसंस्कारशेषत्वाभिधानादत्र तु तस्यैव सकल संस्कारनिरोधानन्तर्य्य कथनात्पौर्वापर्य्यासङ्गतिरिति वाच्यम् । अवस्थाभेदेनैवमभिधानात्—अयमाशयः प्रथमाऽवस्थायां संस्काराणां शेषेपि चरमावस्थायां सकल संस्कार निरोधसम्भवादिति न पूर्वापर विरोधः ॥ २९ ॥ ३० ॥ ३१ ॥

इति श्री कुलयशस्वि शास्त्रि प्रणीतायां योगमञ्जर्यां

समाध्याख्यः प्रथमः पादः ।

समाहित चित्तस्य योगमभिधाय व्युत्थित चित्तस्य योगः कथं सिद्ध्यतीति तत्साधन प्रतिपादनाय क्रिया योगमाह—। "प्रणिधानेति"।

प्रणिधान तपोऽध्यायाः क्रियायोगः स सेवितः।
क्लेशेषु कुरुते सौक्ष्म्यं समाधिश्भावयत्यपि। १ ॥

सर्व क्रियाणां परमगुरावीश्वरे समर्पणं तत्फल त्यागोवा प्रणिधानं येन सन्तुष्टः सततमीश्वरो निःश्रेयस-प्रदातास्यात्-सएव परमगुरुर्निखिलान्तःकरणमल निब-र्हणेनानुध्यायिन मनुष्यस्य प्रत्यक् चेतनाधिगमद्वाराऽप—वर्गसम्प्रसाधयति। अथेश्वरस्य कथं निश्रेयसप्रदत्वमभि-धीयते प्रत्यक्षासिद्ध वस्तुनोनङ्गीकारेणेश्वराङ्गीकारस्य सुतरां दूरनिहितत्वान्नहि प्रत्यक्षा सिद्धं वस्तुस्वीकर्त्तुं मुचितं शशविषाणादीनामपि स्वीकार्य्यतापत्तेस्तं चार्वाक प्रत्यक्षासिद्धत्वान्नच वाच्यमनुमानादिनेश्वरसिद्धि सम्भवः शशविषाणादेश्चानुमापकहेतोरभावान्न सिद्धिरिति, प्रत्य-क्षैक प्रमाणवादिनयाऽस्माभिरनुमानादेः प्रामाण्या—नङ्गीकारात्—नचवाच्यमस्त्वनुमानादेः प्रामाण्यं कथ-मन्यथा धूमदर्शनानन्तरं वह्न्यर्थिनां, पुन्नागनागवकुल पारिजातमन्दारमल्लिकाचम्पक सुरभ्यामोदवासिते नारि-केल तालतमाल बिल्व चिरबिल्वतिन्दु कामलक प्राची नामलक कपित्थ जम्बु शताकीर्णे विपिने वह्नानि मधुराणि

फलानि सन्तीति वचनश्रवणसमनन्तरं फलार्थिनां च प्रवृत्तिरुत्पद्यत इति। वक्ष्यमाणदूषण ग्राहग्रासात्तथाहि व्याप्ति पक्षधर्मताशालिलिङ्गमेवगमकं वाच्यं व्याप्तिश्च नाम्नाता चक्षुरादिवञ्जनिकेति ज्ञातैवाभ्युपगन्तव्या-तथाच कः खलुतज्ज्ञानोपायः प्रत्यक्षमाहोस्विदनुमानं शब्दो वा-न तावत्प्रत्यक्षं तस्य सम्बद्व विषय ज्ञानजनक-त्वेनातीतानागतयोर्व्याप्ति ग्रहासम्भवात्—नाप्यनुमानं तस्य व्याप्तिज्ञानरूपत्वे स्वापेक्षणादात्माश्रयस्तयोर्भेदाङ्गी-कारेणान्योन्यापेक्षणे परस्पराश्रयस्त स्याप्यव्यापेक्षणे चान-वस्थादयः—व्याप्तिपक्षधर्मताशालि लिङ्गरूपत्वेप्यनुमान-स्यैतेदोषाश्चनिर्वाधा इतिनानुमानं व्याप्तिज्ञानोपायः। नापिशब्दः—धूमधूमध्वजयोर्व्याप्तिरिति वचनात्प्राक् शब्द रचनान्यथानुपपत्त्याव्याप्ति पदार्थज्ञानस्यावश्यकत्त्वेन तस्य चानवस्थादिभयेन शब्दजन्यत्वास्वीकारादिति न व्याप्ति ज्ञाने शब्दोप्युपायः। किञ्चानुपदिष्टव्याप्तिकस्या-र्थान्तरदर्शनेऽर्थान्तरानुमित्यभावात्स्वार्थानुमानकथापि लभते नात्मानं लभेतेति व्याप्तिज्ञानोपायाभावेन तच्छालिलिङ्गस्य गमकत्वासिद्ध्या नाप्यनुमानेनेश्वर साध-ने मनोरथ द्रुमफल सम्भवः। नापि शब्दप्रमाणेनेश्वरसाधन सम्भवः क्लेशाद्यपरामृष्टः पुरुषविशेष ईश्वर इतिवाक्य प्रयोगस्यार्थज्ञानमन्तराऽ निष्पत्तेस्तदर्थस्य त्वदभिमत

ईश्वरेणाद्यापि केनचित्प्रमाणेन सिद्ध इति तादृशवाक्य प्रयोगस्यैवासम्भवादिति न शब्द प्रमाणेनापीश्वरः शक्यते साधयितुम्। उपमानादिकन्तु दूरापास्तन्तेषां संज्ञा-संज्ञि सम्बन्ध बोधकत्वेन तत्सिद्ध्यनन्तरं प्रवृत्तेः संज्ञिनश्चेश्वरस्यासिद्ध्या तत्सम्बन्धस्याप्यसम्भवे कथमुपमा-नादिकं संज्ञासंज्ञिसम्बन्धबोधकं भवेत्—किञ्चोपमानादे र्भवतोचित्ष्वेव प्रमाणेष्वन्तर्भावस्वीकारात्प्रमाण त्रयेणे-श्वर सिद्धिनिराकरणा देवोपमानादपि तन्निराकारण सम्भवेऽपार्थं उपमानादेरीश्वर सिद्धिनिराकरण मन्नाह इति नेश्वरः कश्चित्पदार्थोयः सन्तुष्टो निश्रेयसं विदध्या द्यं कश्चिद्वाप्रणिदध्यादिति नयुक्तन्निश्रेयसार्थिनामी-श्वरेसर्वं क्रियासमर्पणरूपप्रणिधान मिति प्राप्ते।

उच्यते। कस्य हेतोरयमीश्वर निषेधः। तत्र प्रमाणा-भावाद्वातस्य शशविषाणायमानत्वेनासत्त्वाङ्गीकारात्—नद्वितीयः। ईश्वरोऽसन्निति वाक्यप्रयोगस्यार्थावगमसन्त-राऽनिष्पत्ते रिति वाक्यप्रयोगात्प्रागीश्वरावगमेतदभ्युपगम आवश्यकः यदिचैव मुच्यते तादृशवाक्य प्रयोगात्प्रागीश्वरो मया शशविषाणवदसन्नवगतस्तथापीश्वरावगमस्त्वावश्य-को भवतः सत्त्वेन वाऽसत्त्वेनावगच्छेद्भवान् अद्वैवे-तावश्यं कारणम्—ईश्वरमसन्तमन्यमानेन कदाचिद्गुरु प्रसादात्सत्त्व मप्यवगमिष्यति-प्रसादयगुरुं सच्छुश्रूषया

यथोपदिशस्त्वमीश्वर सत्त्व प्रसाधन प्रकारं ब्रूहिचेश्व-रोऽसन्निति वाक्यप्रयोगात्प्राक्केन प्रमाणेनेश्वरोऽसत्त्वमवगतो भवता लोकोत्तर प्रज्ञेण प्रत्यक्ष प्रमाणाद्वाऽनुमानात् अनुमानाद्दिति चेत्तत्स्वीकारे सिद्धान्तच्युतिरस्वीकारे चेश्वरा सत्त्वस्यासिद्धिरिति नानुमानेन तदसत्त्वावगमो युक्तः। प्रत्यक्षप्रमाणाच्चेन्नू ह्वाद्दिर्गतो भवान् कुत्रगत बन्ध, वर्गसपश्यन्—तदसत्त्वन्निश्चित्य कथन्न शोकाग्निदाहदग्ध हृदयोमूर्छितो भूमौशयीतेति न प्रत्यक्ष प्रमाणाभावा दीश्वरासत्त्,सिद्धिः। नच वाच्यं नमया प्रत्यक्ष प्रमाणा-भावादीश्वरासत्त्वमभिधीयतेऽपितु प्रत्यक्षादेवेति, प्रत्यक्ष-स्यापि स्वसम्बद्ध विषयाबोधजनकत्वेन शशविषाण समत्वादभ्यु,पगतेश्वरेणासता चक्षुरादीनां सम्प्रयोगानुपपत्तेर्नह्यसता शशविषाणेन चक्षुरादि सम्प्रयोगस्सम्भवति घटाभावादिनैवाऽसतापि विशेषण विशेष्य भाव सन्निकर्ष स्वीकारे तस्य सत्त्वम्प्रसज्येतेति वृद्धिमिच्छतस्ते मूल हानिर्ह्यकिष्टतरम्—नहि घटाभावादयोऽ सन्त शशविषाण समास्तेपि भावा एवेति न प्रत्यक्षादपीश्वरासत्त्व साधन सम्भवः। किञ्च निषेधस्य प्रतियोगिज्ञान पूर्वकत्वेनेश्वर रूप प्रति योगिज्ञान मन्तरा न तन्निषेध सम्भव इतीश्वरं निषेधतस्तवापीश्वराभ्यु,पगम आवश्यकोऽ तो न कथञ्चिदपीश्वरापलाप सम्भवः। नच निषेधस्य प्रतियोगि

ज्ञान मन्तरा॒ऽ सिद्धिर्नियमाभ्युपगम स्तथाप्यया वैकल्पि-
केनैव प्रत्ययेनेश्वर रूपः प्रतियोगी गृहीत इत्यसत एवे-
श्वरस्य निषेधस्वीकारेण प्रतियोगिज्ञान विषयाऽपीश्वर
साधनावकाश इति—असतो निषेधानुपपत्तेर्नह्यसन्नि—
धातु प्रतिषेद्धुं वाऽर्हति येनालीकताभ्युप—
गम्येश्वरस्य तन्निषेधोऽनुष्ठीयेतेति नेश्वर सत्त्वावगममन्तरा-
तन्निषेधः । नच वाच्यमसतोऽपि गगनारविन्दस्यास्ति
दृष्टिगोचरः प्रतिषेधो गगनारविन्दं नास्तीति प्रतीति
सम्भवात्तत्रापि सत एव प्रतिषेधात्—नहि गगनारविन्दं
नास्तीति प्रतीति गोचरोऽसतो गगनारविन्दस्याभावः,
किन्तु—अरविन्दे गगनजन्यत्वाभाव इति नासतोनिषेध
सम्भवस्तथा चेश्वरोनास्तीति निषेधो न सम्भवति—
ईश्वरस्य त्वयावैकल्पिक प्रत्ययेनासत्त्वाभ्युपगमात् । यदि
चारविन्दे गगनजन्यत्वाभाव इवेश्वरेऽपवर्गदातृत्वा-
भाव ईश्वरो नास्तीति प्रतीतिगोचर इत्यभ्युच्येत तदा-
प्यरविन्दवदीश्वरसत्त्वावगम आवश्यकः । किञ्चविकल्पस्य
भेदेऽभेदस्य अभेदेच भेदस्य जनकत्वेन निषेध प्रति-
योगितया ज्ञायमानस्यासत ईश्वरस्य कथं प्रत्ययो
वक्तव्यः । किमीश्वरे विद्यमानस्यासत्त्वस्या भेद प्रत्ययः
आहोस्वित्तन्निन्नासताऽभेद प्रत्ययो वाऽसत ईश्वरस्या-
न्यत्र सत्यभेद प्रत्यय ईश्वरादभिन्नस्यासत्त्वस्य भेदप्रत्ययोवा

न तावत्प्रथम ईश्वरसत्त्वाङ्गीकारमन्तरातत्रासत्त्वस्या— विद्यमानतानुपपत्तेस्तदङ्गीकारे चेश्वरासत्त्वासिद्धिरिति यथा नैकस्मिन्नपि कल्पितकथमपीश्वर सत्त्वाङ्गीकारमन्तरा वैकल्पिक प्रत्ययोपपत्तिरिति सिद्ध ईश्वरः परम गुरुर्यस्मिन्सर्वक्रियासमर्पणात्मकं प्रणिधानमुच्यते एते- न प्रथमविकल्पोऽपिनिरस्तोबोध्यः । व्याप्ति ग्रहणो- पायश्च न विस्तर भयादिह प्रपञ्चितस्सचमत्काल योग- प्रदीप कलिकायामीश्वर सिद्धि प्रकरणे द्रष्टव्य इति कृतं पल्लवैः प्रकृतमेवानुसरामः । तपः कृच्छ्र चान्द्रायणा- दि—स्वाध्यायः प्रणव पूर्वक पवित्र मंत्राणां जपः । एते क्रिया योगपदव्यपदेश्याः । ईश्वरे कर्मसमर्पणमन्तरेण व्युत्थित चित्तस्य योग सिद्धिमत्यन्ताऽसम्भव इति प्रणि— धानोपादानम् । प्रणवादि पवित्र मन्त्र जपमन्तराव्युत्थि— तचित्तस्य प्रथमत एवासदालापेभ्योऽनिवृत्ते रित्यध्यायो- पादानम् । ननु क्रियायोग पदव्यपदेश्यानान्तपोऽध्यायें- श्वर प्रणिधानामेकैकस्यापि सम्यक्क्लेशतनूकरणार्थत्वं समाधिभावनार्थत्वं चेत्यत आह—। स इति । एकवचना न्तत्तच्छब्द निर्देशात्पूर्वपरामृष्ट क्रियायोगस्यैव क्लेश- तनूकरणार्थत्वं समाधिभावनार्थत्वं चेतिभावः । नहि जातमात्रः क्रियायोगोऽनेक जन्मार्जितवासना विषया- प्यायित स्फीतेषु क्लेशेषु सोच्छ्रमाधातुमीष्ट इति सेवित

इत्यनेन दीर्घकालादरनैरन्तर्य्यसत्काराऽऽसेवितत्वं प्रदर्शितं क्रियायोगस्य ॥१॥ अथ के क्लेशा इति तत्स्वरूपाकांक्षायामविद्याऽस्मिता रागद्वेषाभिनिवेशान्पञ्च क्लेशान् सञ्ज्ञान्तर द्वारा क्रमेण निर्दिशति—"तम" इति।

तमो मोहो महामोहस्तामिस्रोह्यन्ध सञ्ज्ञकः।
एते क्लेशास्तमः क्षेत्रमुत्तरेषां प्रकीर्त्तितम् ॥ २ ॥

सत्यां चाविद्यायामेषां सत्त्वात्क्षीयमाणायांचानुक्षयादित्यस्मितादिचतुर्णामविद्यामूलकतामाह—"तमः क्षेत्रमिति"। तमोऽविद्याऽनात्मन्यात्माभिमानरूपा क्षेत्रं प्रसवभूमिः। उत्तरेषामस्मितादि चतुर्णाम्। प्रकीर्त्तितमुदाहृतमितर्य्थः ॥ २ ॥ क्लेशानां चातुर्विध्यन्दर्शयति—। एते—इति।

एते चतुर्विधा ज्ञेयाः प्रसुप्तादि प्रभेदतः।
तमोऽनित्येषु नित्यत्व प्रत्ययः परिभाष्यते ॥ ३ ॥

आदिना तनु विच्छिन्नोदाराणां परिग्रहस्तत्र ये क्लेशाश्चित्त भूमौ स्थिताः प्रबोधाभावेन नारभन्ते स्वकार्य्याणि ते प्रसुप्ताः। स्वप्रतिपक्षभावनया शिथिलीकृतकार्य्य सम्पादन शक्तयस्तनवः। अन्योन्य मितरोत्कर्षे बलवता क्लेशेनाभिभूतशक्तयोविच्छिन्नाः। यथा रागकाले द्वेषः। द्वेषकाले च रागः। अभिनिवेशकाले च रागद्वेषावित्यादि। ये स्वं स्वं कार्य्यमभिनिवर्त्तयन्ति ते उदाराः।

अविद्यास्वरूपमाह—। "तम" इति। अतस्मिंस्तदिति भासस्तमः। अनित्येषु कार्य्येषु पृथिव्यादिषु यो नित्यत्वप्रत्ययः अध्रुवेषु च ध्रुवप्रत्ययो ध्रुवा पृथिवी ध्रुवस्समीरः। ध्रुवं नीरं ध्रुवं चीरं नैते कदाचिदपि लीयन्त इत्याकारः एतेनाशुचिदुःखानात्मसु शुचिसुखात्मत्वाभिमानोऽविद्येत्यप्युक्तं बोध्यम् ।३॥ अस्मितादिरूपमाह—। मोह इति।

मोह एकात्मता प्रोक्तो रागो महामोहस्सुखेच्छया।
तामिस्रो दुःखहानेच्छा द्वेषोऽन्धतामिस्रसंज्ञकः ४

पुरुषो दृक्शक्तिः बुद्धिर्दर्शनशक्तिस्तयोर्भोक्तृभोग्यत्वेन भिन्नयोरपि य एकताभिमानस्स मोहोऽस्मिता ननु तमोऽपरसञ्ज्ञाया अविद्यातोऽस्मिताख्यमोहस्य को विशेष उभयोरभिमानात्मकत्वाऽविशेषादिति चेन्न। अविद्ययाऽनात्मन्यात्मताभिमत्य पश्चाद्बुद्धिपुरुषयोरैक्याभिमानः सोऽस्मिताख्यो मोहो येन कर्त्ताहमस्मि मेधावी न कश्चिदप्यात्मसमं निरीक्षे-इत्यभिमन्यते तथा चाविद्याऽस्मितयोरयम्भेदः। यथा चन्द्रबिम्बविरहिणि वारिणि चन्द्रो वारिणीति धीः प्रागुत्पद्यतेऽनन्तरं च तद्गते चन्द्रे कम्पादिकत्वावगाहिनी, तद्वदनात्मन्यात्मत्वाभिमानानन्तरं यथा कर्त्तास्मीत्यभिमन्यते साऽस्मिता तस्याश्चाविद्याकार्य्यत्वेनाभिमानात्मकत्वेऽपि न क्षतिः कार्य्यकारणानुप्रवेशस्यावश्यकत्वात्—सुखे सुखसाधने चेच्छा महामोहो रागः।

दुःखाभिज्ञस्यदुःखे तत्साधने च जिघांसा तासिद्धोद्वेषः। पूर्वजन्मानुभवजनित वासनाबल वेगादुत्पद्यते यस्त्वेषां मरणत्रासोममशरीरेन्द्रियादिभिर्वियोगोमाभूदित्येवं स चण्डीऽभसञ्ज्ञकोऽभिनिवेशः। ४॥ एतामुक्तक्लेशानां द्वैविध्यं प्रहाणोपायद्वयं चाह—। "सूक्ष्मा" इति।

सूक्ष्मालयेन हेयास्ते ध्यानेन वृत्तयस्तथा।
दृष्टादृष्ट जनिज्ञेयः कर्माशयस्सकारणः। ५॥

सूक्ष्मा, वासनारूपेणावस्थिताः, लयेन चित्तप्रलयेन, हेयास्त्याज्याः, चरिताधिकारे चेतसि लीने तेनैव सह लीयन्ते सूक्ष्माः क्लेशाः स्थितानामारब्ध कार्य्याणां क्लेशानां वृत्तयःसुखदुःख मोहात्मिकाः पूर्वोक्त क्रियायोगेन तनूकृत्य ध्यानेन चित्तैकाग्र्यलक्षणेन हेयाः। एतेन स्थूलसूक्ष्म क्लेशयोस्त्वल्पायासमहायास परिहार्य्यत्वमपिबोध्यं यथा वस्त्राणां स्थूलोमलःस्वल्पप्रयासेन पूर्वंनिर्धूयते तदन्तर्गतःसूक्ष्मश्च महता प्रयत्नेन तद्वत् क्लेशानां स्थूलाः सुखदुःखमोहात्मिका वृत्तयश्चित्तप्रसवापेक्षया स्वल्पायासाध्य ध्यानेनाल्पप्रयासेन परिहृता भवन्ति सूक्ष्माश्च महदायाससाध्य चित्तप्रसवेन महदायासेनेति। क्लेशानां स्वरूपादिक मभिधाय कर्म्माशयस्य तत्प्रदर्शयितुमाह। "दृष्टादृष्टेति"। सकारणः अविद्यादिक्लेशमूलकः। कर्म्माशयवासना-सूक्ष्मस्वरूपेणावस्थितं कर्म। दृष्टेऽस्मिन् कर्म्मक्षि

अदृष्टे जन्मान्तरे वा यो वेदनीयस्तद्यथा नारकिणाम-दृष्टजन्मवेदनीयः कर्माशयः—नन्दीश्वर नहुषयोर्दृष्ट जन्मवेदनीयः—यतस्तावस्मिन्नेव जन्मनि स्वकं परिणामं हित्वा देवत्वतिर्यक्त्वाभ्यां परिणतौ। अन्येषां कर्माशयो यथायथं दृष्टादृष्ट जन्मवेदनीयोऽवगन्तव्यस्तथाचायमत्र विवेकः कर्माशय इत्यनेन कर्मणां वासनात्मकं स्वरूपं दर्शितं सकारण इत्यनेन च सर्वेषां स्थूलसूक्ष्म रूपेणावस्थितानां कर्मणामविद्यादि क्लेशजन्यत्वं प्रदर्शितं दृष्टादृष्टेत्यनेन तु फलं दर्शितमिति ।५॥ सत्यविद्यादौ मूले कर्माशयो जात्यायुर्भोगान् जनयतीत्याह—"कर्माशये"ति ।

कर्माशय समूलस्य विपाको भवति त्रिधः ।
पुण्यापुण्य प्रसूतत्वात्सुख दुःखफलास्त्विमे । ६ ॥

विपाकः फलं त्रिधः—जात्यायुर्भोगैस्त्रिप्रकारः । जातिर्जन्म-ब्राह्मणत्वादिर्वा । आयुश्चिरकालं कायसम्बन्धः। भोगः सुखदुःखान्यतरसाक्षात्कारः । सञ्चित कर्मवासना विपाकं प्राप्य स्वकीयं जात्याद्यात्मकं कार्य्यमारभन्त इति भावः । पुण्यकर्मवासना परिपाकलब्ध जन्मनां जात्यायुर्भोगानां सुखजनकत्वं पापकर्म वासनापरिपाक लब्ध जन्मनान्तु दुःख जनकत्वमित्याह-"पुण्यपुण्ये"ति-इमे जात्यायुर्भोगाः ॥ ६ ॥ अनैकान्तिक दुःखोच्छेदं समीक्ष-

मानस्य ज्ञातत्त्वं शास्त्रादिविवेकस्य योगिनस्तत्काल्तमेव भोग साधनं परिणाम तापसंस्कारैर्दुःखमादावन्ते मध्ये च विषयसुखकालेऽपि विषसंम्पृक्तान्नवत्प्रतिकूल वेदनीयमेवेत्याह—। परिणामेति।

परिणामताप संस्कार दुःखैर्गुणवृत्तिभिः।
विरोधाद्वस्तु जातंच दुःखमेवविवेकिनः।७॥

परिणामदुःखेन तापदुःखेन संस्कार दुःखेन च गुणानां सत्त्वरजस्तमसां वृत्तयःसुखदुःखमोहात्मिका याभिः परस्परं विरोधात्—अभिभाव्याभिभावकभावात् वस्तुजातमेव सर्वमेव विवेकिनः ज्ञातत्त्वशास्त्रादि तत्त्वस्य दुःखमित्यन्वय पूर्वकोऽर्थः। तत्र परिणामदुःखं भोगदशा समापन्न विषय सजातीयाभिलष्यमाण विषयान्तराऽप्राप्ति निबन्धनम् तापदुःखमुपभुज्यमान सुखसाधन प्रतिद्वन्द्वि विषयविषयकद्वेषसमुत्थम्—। संस्कारदुःखं विषयसन्निधान जनित सुखादिसमुत्पन्नानवस्थित संस्कार वेदनीयम्। पुण्यकर्म वासनाजनित सुखानुभवावसरेऽपि पूर्वोक्तदुःखानां मूलतोऽनुच्छेदात्सुखमपि दुःखसंसृष्टतया विषसंपृक्तान्नवद्दुःखमेवेतिभावः।७॥ यथा चिकित्सा शास्त्रं चतुर्व्यूहं रोग आरोग्यं रोगहेतु भैषज्यमित्येवमिदमपि शास्त्रंचतुर्व्यूहमित्याह—। "हेये"ति।

हेयहाने तयोर्हेतू इतिव्यूहा यथाक्रमम् ।
हेयमनागतं दुःखं संयोगोद्रष्टृदृश्ययोः । ८ ॥
हेयहेतुस्तथाहानं दुःखत्रयनिवर्त्तनम् ।
हेतुरविप्लवा तस्य विवेकख्यातिरुच्यते । ९ ॥

हेयहेयहेतु हानहानोपायांश्चतुरोव्यूहान् स्वरूप-निर्देशपूर्वकं क्रमेण दर्शयति—।"हेयमनागतमि"ति । भूतदुःखस्य व्यतिक्रान्तत्वेन क्लेशाजनकत्वमनुभूयमानस्य च हातुमशक्यत्वेनानागतस्यैव दुःखस्य हेयता पर्य्यव-स्यति । द्रष्टा चेतनः पुरुषः । दृश्यं परिणामि बुद्धितत्त्वम्—तयोर्योऽविवेकाग्रह पूर्वकः संयोगोभोक्तृभोग्यत्वेन सन्निधानं सहेयस्य त्रिविध दुःख त्रयस्य हेतुःकारणम् । दुःखत्रयस्यात्यन्तिकी निवृत्ति र्हानम् । तस्य हानस्य हेतुः कारणमविप्लवा न विप्लवे विपर्य्योऽसव्युत्थाने यस्यास्साविपर्य्यय व्युत्थानशून्या विवेकख्यातिः पुरुष विशेष्यक प्रकृत्यन्यत्वप्रकारक साक्षात्कारः । ८ ॥ ९ ॥ दृश्यस्य क्रिया स्वरूपप्रयोजनानि दर्शयति ।"दृश्यमि"ति ।

दृश्यं भोगापवर्गार्थं स्थितिकर्म्म प्रकाशवत् ।
भूतेन्द्रियात्मकं ज्ञेयमात्मा तस्य दृगर्थकः ।१०॥

भोगःसुखदुःखान्यतरसाक्षात्कारः । अपवर्ग आत्य-न्तिकी दुःखनिवृत्तिस्तावर्थः प्रयोजनं यस्य तत् ।

ननु भोगापवर्गौ यदि दृश्यस्य स्त्रीक्रियेते तदा कथं तद्व्यतिरिक्त चेतनेन चेतनोऽहङ्करोमीति कृतिसामानाधिकरण्यचैतन्य प्रत्ययेन तत्र चैतन्यस्यापि सम्भवात्—नचेद्दृश्यस्य तदा चेतनस्य भोगापवर्ग भागित्वेनासङ्गत्वक्षतिरितिचेन्न दृश्यगतभोगापवर्गयोश्चेतने पुरुषे व्यपदेशसम्भवात्—यथा राज्ञ्यविद्यमानावपिस्वस्वामिभावसम्बन्धमादाय योद्धृगतजयपराजयौव्यपदिश्येते तथापुरुषेऽपि भोक्तृभोग्यत्व सम्बन्ध निबन्धनो व्यपदेशः । परिणामित्वेन बुद्धौ चैतन्यानुमानस्यावश्यकत्वेन चेतनोऽहं करोमीति प्रतीतेश्चैतन्यांशे भ्रान्तित्वादत एव तद्व्यतिरिक्त चेतन कल्पनमपि चेतनस्य च न स्वाभाविकौ भोगापवर्गौ स्वाभाविकत्वे तयोर्निवृत्त्यसम्भवात् नहि स्वभावस्यापलापः केनापि कर्तुं शक्यते नह्युष्णस्वभावोवह्निर्वर्षसहस्रेणापि शीतयितुं शक्यस्तस्माद्भोगापवर्गं स्वभावकः पुरुषस्तस्यभोगस्वभावत्वे संसारानुच्छेदोऽपवर्ग स्वभावत्वेचानुभूयमानबन्धानुपपत्तिस्तथाच साङ्ख्यसूत्रम् । "स्वभावस्यानपायित्वादननुष्ठानलक्षणमप्रामाण्यमि" ति भोगापवर्गौ दृश्यस्यार्थः । स्थितिर्नियमनरूपातद्वत्तमः । कर्म प्रवृत्तिरूपं तद्वद्रजः । प्रकाशोज्ञानरूपस्तद्वत्सत्त्वम् । भूतानि पृथिव्यादीनि । इन्द्रियाणि श्रोत्रादीनि । आत्मा स्वरूपं यस्य तत् भूतभावेनेन्द्रियभावेन च परिणतमि-

त्यर्थः । तस्योक्तलक्षणदृश्यस्यात्मा स्वरूपं दृगर्थकः पुरुषभोगापवर्गं सम्पादकः ॥१०॥ दृश्यं निरूप्य द्रष्टारं निरूपयति । "द्रष्टे"ति ।

द्रष्टा च दृशिमात्रस्स्याच्छुद्धोपि प्रत्ययानुगः ।
दृश्यं नाशमपिप्राप्तं कृतार्थं पुरुषम्प्रति । ११ ॥
तदन्याश्यन्यवृत्तित्वात्संयोगो द्रष्टृदृश्ययोः ।
रूपोपलब्धि हेतुस्स्यादविद्यातस्यकारणम् । १२ ॥

द्रष्टापुरुषः । दृशिमात्रश्चेतनः । शुद्धोपि सुखाद्यसंस्पृष्टोपि प्रत्ययानुगः प्रत्यया विषयोपरक्तज्ञानानि तान्यनुगच्छत्यनुसरतीति । अव्यवहितसन्निधानमात्रेण बुद्ध्युपरागे सति पुरुषस्य द्रष्टृत्वं सम्भवतीतिभावः । ननु-दृश्यस्य भोगार्थत्वे कृतभोगस्य तस्य प्रयोजनाभावादेवोपरमे सर्वेषां पुरुषाणां शुद्धरूपत्वेन बन्धराहित्यात्संसारमात्रोच्छेदस्स्यादित्यत आह— ।"दृश्यमिति"। विवेकख्यातिपर्य्यन्तं भोगसम्पादनात्कृतार्थं विवेकख्यातिमन्तं कुशलं पुरुषं प्रति दृश्यं नाशम्प्राप्तमपि नष्टमपि तद्दृश्यमनाशि अनष्टम् । तदन्येष्वकुशलेष्वनुत्पन्न विवेकख्यातिमत्सु वृत्तित्वात्—विद्यमानत्वात् । दृश्यस्य सर्वपुरुषसाधारणतया कृतार्थम्प्रति नष्टत्वेप्यन्यान्प्रत्यनष्ट व्यापारतयाऽवस्थानात्ततस्तदनाशीत्येक मुक्तावनेकमुक्तौ सर्वमुक्तिप्रसङ्गः । दृश्यद्रष्टारौ निरूप्य सम्प्रति तयोरुसम्बन्धं दर्श-

यति—। संयोग इति । द्रष्टृदृश्ययोर्भोक्तृभोग्यत्वात्मक स्वरूप सम्बन्धविशेष लक्षणःसंयोगस्य तयोरूपोपलब्धौ स्वरूप साक्षात्कारहेतुः कारणं व्यापकयोः प्रकृति पुरुषयोस्संयोगसम्बन्धासम्भवात्। नच दैशिकात्यन्ताभावाप्रतियोगि लक्षणव्यापकत्वं प्रकृतौ सर्वमूर्त्तसंयोगित्व रूपं पुरुषं-इति प्रकृति पुरुषसंयोगोपि सम्भवति-प्रकृतेस्सर्वत्र तादात्म्येन पुरुषवत्सर्वमूर्त्तसंयोगित्वाभावादिति वाच्यम् अमूर्त्तद्वय संयोगानङ्गीकारात्प्रकृतौ सर्व मूर्त्त संयोगित्व रूप व्यापकत्व विरहेपि क्रियाशून्यत्व रूपामूर्त्तत्वसम्भवान्नामूर्त्तयोः प्रकृतिपुरुषयोःसंयोगोयुक्तः। यद्यपि परिणाम लक्षणक्रियाशून्यत्वं घटादिष्वप्यस्तीति तेषामपि संयोगानुपपत्तिस्तथाप्यत्र क्रियापदेन परिणामान्यक्रियाया विवक्षणान्नदोषः। वस्तुतस्तु न प्रकृतेःपुरुषेण साक्षात्सम्बन्धोरूपोपलब्धि हेतुरपितु बुद्धिद्वारकस्सच संयोगोपि सम्भवति घटाकाशस्यात्मनेव व्यापकयोराकाशात्मनोर्मिथस्संयोगाभावेपि घटाकाशस्यात्मना संयोगो निर्बाधो घटाकाशस्याव्यापकत्वाद्विभ्वोर्द्वयोस्संयोगानङ्गीकारादेवं प्रकृतेर्विभुत्वेपि बुद्धेरविभुत्वेन तद्द्वारकसंयोगोनानुपपन्नः। एतेन भोक्तृभोग्यत्व लक्षणसम्बन्ध स्वीकारे सुषुप्तौ पुरुषे भोक्तृत्वाभावेन रूपोपलब्धि हेतु सम्बन्धभङ्गात्पुनरनुत्थान प्रसङ्ग इत्यपि निरस्तम्। तथापि सं-

योगसम्बन्धस्य सत्वात्—स्वस्वामिभाव सम्बन्धाङ्गीकारा-द्वा । तस्य संयोगस्येत्यर्थः ।११॥१२॥ संयोगकारणा विद्यानाशोपायमाह—। यदेति ।

यदा सञ्जायते ख्यातिर्नाशस्तस्या निरूपितः ।
सप्तधा प्रान्तभूमौधीर्योगिनस्तस्य भाषिता । १३ ॥

ख्यातिरित्यतः प्राग्विवेकेति पूरणीयम् । तथाच विवेकख्यात्याऽविद्यानाशस्ततो द्रष्टृदृश्यसंयोगनाशस्ततश्च दुःखत्रयहानरूपं पुरुषस्य कैवल्यमिति । उत्पन्न विवेक ज्ञानस्य योगिनस्सालम्बन समाधि भूमिपर्यन्तं ज्ञातव्य विवेक रूपा प्रज्ञा सप्तप्रकारा भवतीत्याह—।"सप्तधेति"। तस्य-उत्पन्न विवेकख्यातेः। प्रान्ता सालम्बन समाधि-पर्यन्ता या भूमिः अवस्था-तस्यां सप्तधा सप्त प्रकारा धीः प्रज्ञा भाषिता योगिभिर्निरूपिता तथाहि—ज्ञातं मया ज्ञेयं न ज्ञातव्यं किञ्चिदवशिष्यते१ । क्षीणाः मे क्लेशा न क्षेतव्य-मवशिष्यते २ । ज्ञानमधिगतंमया ३। लब्धा मया विवेकख्यातिः ४ । इत्थं चतुर्विधाकार्यमुक्तिः । चरिताथी मे प्रज्ञा १। समाप्ताधिकारा गुणा गिरिशिखरच्युतग्रावाण इव न पुनरवस्थानं गमिष्यन्ति २ । एतस्यामवस्थायां गुण-सम्बन्धातीतस्वात्ममात्र निष्ठोऽहम् ३। इयच्च त्रिप्रकारा-चित्त मुक्तिरिति दर्शिता सप्तप्रकाराप्रज्ञा ॥१३॥ वक्ष्यमाण योगाङ्गानुष्ठानाच्चित्तसत्त्वावरणरूपाशुद्धिक्षये योगाङ्ग

प्रदीप्तिरूपां विवेकख्यातिपर्य्यन्तस्सात्त्विकः परिणामस्स विवेकख्यातिरुपाय इत्याह—। योगाङ्गानामिति—।

योगाङ्गानामनुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ॥ २८ ॥

*(as printed:)* योगांगानामनुशाना द्विलीने पञ्चपर्वणि। ज्ञानप्रदीप्तिराख्याते स्तत्प्रत्ययानुवर्त्तिनी ॥ १४ ॥

पञ्चपर्वणि—चित्तसत्त्वावरण रूपाशुद्धि स्वरूपे विपर्य्ये। विलीने विनष्टे। ज्ञानप्रदीप्तिरुत्तरोत्तर वर्द्धमानः सात्त्विकः परिणामः। आख्यातेः विवेकख्यातिपर्य्यन्तः। तत्प्रत्ययस्य पञ्चपर्व विनाशस्य अनुवर्त्तिनी अनुगामिनी यथा यथा योगाङ्गानामनुष्ठानं तथा तथाऽशुद्धेः प्रक्षयः। यथा यथा चाशुद्धेः प्रक्षयस्तथा तथा ज्ञान दीप्तिः क्रमेण वर्द्धते सति च विवेकसाक्षात्कारे निवृत्तकर्तृत्वाद्यभिमानः पुरुषःस्वस्वरूपेऽवतिष्ठते—योगाङ्गानुष्ठानं चाशुद्धेर्वियोग कारणं ज्ञानदीप्तेस्त्वाप्तिकारणम्। ननुकतिचैतानि कारणानि येनैतदुच्यते इतिचेत्—उत्पत्तिस्थित्यभिव्यक्ति विकार प्रत्ययाप्ति वियोगान्यत्व धृतयो नव कारणानि तद्यथात्मनोभवति ज्ञानस्योत्पत्तिकारणं यतोमनसः परिणाम विशेषो ज्ञानं विषयान्तर मवगाहमानं तस्मिन्नेवोत्पद्यते—नैयायिकवदस्मिन्मये ज्ञानोत्पत्तेरात्मन्यस्वीकारात्। पुरुषार्थता च मनसःस्थितिकारणं यावत्पुरुषार्थं मनसोऽवस्थानात् कृत पुरुषार्थन्तु न पुनः कार्य्यमारभते इति पुरुषार्थता मनसःस्थिति कारणम्। इयमेव मनसः

स्थितिः यत्कार्य्यारम्भणम्। अभिव्यक्ति कारणं यथा रूपस्या-लोकः—रूपज्ञानं च, यतःसतोरालोक ज्ञानयोरूपस्याव-त्यभिव्यक्तम्। एवमविवेक निवृत्तिरप्यात्मस्वरूपस्याभि व्यक्ति कारणं सतोपि तस्य सत्यविवेकेऽभासनात्। विकार कारणं मनसो विषयान्तरं यतो विषयाद्विषयान्तरं गच्छ-न्मनोनैकाग्रतां लभते। प्रत्ययकारणं धूमस्तज्ज्ञानं वा वह्निज्ञानस्य यतोधूमात्तज्ज्ञानाद्वा वह्निं प्रतिपद्यते। आप्तिकारणं योगांगानुष्ठानं ज्ञानदीप्तेर्योगाङ्गानुष्ठान मन्तरेण ज्ञानदीप्तेरसम्भवात्—दण्डादिकमपि घटस्या-प्तिकारणं तद्विनापि घटोत्पत्तेरसम्भवात्—वियोगकारणं योगाङ्गानुष्ठानमशुद्धेः। धूमस्य सम्रकादेः। अन्यत्वकारणं सुवर्णस्य सुवर्णकारः। धृतिकारणं शरीरमिन्द्रियाणां तानि च शरीरस्य जात्यादिकं च काष्ठनौकादेः वायुस्ना काशस्थितवृणादेः।१४॥ कानि योगाङ्गानि कति च यैर-शुद्धिक्षयो भवतीत्यत आह—। "प्राणायामनमि"ति।

प्राणायमन माहारो यमोनियम आसनम्।
समाधिर्धारणा ध्यानमष्टावङ्गान्यमूनि च।१५॥

आहारइत्यस्य प्रत्याहार इतरर्थः। एतेषु धारणा ध्यान समाधयोन्तरङ्गाण्यङ्गानि प्राणायामादीनितु हिंसा-दि वितर्कोन्मूलनद्वारा समाधे रेवाङ्गानीति तेषां बहि-रङ्गत्वम्। तथाप्येषामन्योन्यमुपकार्य्योपकारकभावे-

नामन्तरङ्गत्वबहिरङ्गत्वे तद्यथा यमो नियमस्यान्तरङ्गं बहिरङ्गञ्चासनस्य। नियमोऽन्तरङ्गमासनस्य बहिरङ्गं च प्राणायामस्य। आसनमन्तरङ्गं प्राणायामस्य बहिरङ्गंच प्रत्याहारस्य। प्राणायामोऽन्तरङ्गं प्रत्याहारस्य बहिरङ्गं च धारणायाः। धारणाऽन्तरङ्गं ध्यानस्य बहिरंगं च समाधेः। ध्यानमन्तरंगं समाधेर्बहिरंगंचयोगस्य। समाधिर्योगस्यान्तरंगमिति पूर्वोत्तर क्रमेणान्तरंगबहिरंगभावः। एतेन धारणाध्यानयोरपि बहिरङ्गत्वं दर्शितं तयोरन्तरङ्गत्वादस्य यमाद्यपेक्षया निर्णयनीयः। व्युत्थित चित्तस्य योगिनो नह्यहिंसादियमानुष्ठान मन्तरा नियमस्सिध्यति नापि नियमं विनाऽऽसनं नाप्यासनं विना प्राणायामो नापि प्राणायाममन्तरेण धारणा नतां विना ध्यानं न ध्यानं विना समाधिर्नतामन्तरा योगस्सिध्यतीत्यष्टाङ्गोपादानम् ॥ १५ ॥ तत्र यमान्दर्शयति—।

अहिंसेति।

अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यापरिग्रहौ।
यमा जात्याद्यवच्छिन्ना स्सार्वभौमा महाव्रतम् ।१६

अहिंसासर्वभूतानामनभिद्रोहः। सत्यं वाङ्मनसयोर्यथार्थवत्त्वम्। अस्तेयं परस्वानपहरणम्। ब्रह्मचर्य्यमुपस्थसंयमः। अपरिग्रहो भोगसाधनानामस्वीकारः। एते पञ्चयमा जात्यादिभिः पञ्चभिरवच्छिन्ना

सार्वभौमास्सर्वासु चित्तभूमिषु भवा महाव्रतमुच्यन्ते हिंसाया जात्यवच्छेदो यथा ब्राह्मणं न हनिष्यामि १ देशावच्छेदस्तीर्थे न हनिष्यामि २ कालावच्छेदश्चतुर्दश्यां न हनिष्यामि ३ समयावच्छेदो देवाद्यर्थं व्यतिरेकेन हनिष्यामि ४। अनवच्छेदो न कदाचिदपि कश्चिदर्थे हनिष्यामि। एवमस्तेयादिष्वपि योज्यम्। तत्र हिंसादिरेकैक पञ्चभिरवच्छिन्नोव्रतमुच्यते। अहिंसादयः पञ्च पञ्चावच्छिन्ना महाव्रतमुच्यन्ते। अहिंसादयः पञ्चैकेन जात्यादिनावच्छिन्ना अल्पव्रतमुच्यन्ते—अहिंसादिरेकैको जात्यादिनैकेनैकेनावच्छिन्नस्स्वल्पव्रत मुच्यते—इति महाव्रत मित्येतदन्तर्गतमहेत्यनेन सूचितम् ॥ १६ ॥

नियमान्दर्शयति। " नियमा " इति।

नियमाश्शौच सन्तोष तपःस्वाध्यायार्प्पणानि च ।
भावयेत्प्रतिपक्षाने तेषां वितर्क्क बाधने । १७ ॥

शौचं द्विधा मृज्जलादिभिर्बाह्यं शरीरस्य मैत्र्यादिभिश्चान्तरं चित्तस्य। सन्तोषोऽधिकलाभानुपादित्सा। तपश्शीतोष्णादिद्वन्द्वसहनं यथायोगं कृच्छ्रचान्द्रायणादीनामनुष्ठानञ्च। स्वाध्यायः प्रणवादि पवित्र मन्त्राणां जपोऽध्यात्मशास्त्राध्ययनं वा। अर्प्पणं सर्वक्रियाणां परमगुरावीश्वरे समर्प्पणम् तदेतत्प्रणिधानमप्युच्यते। एतेषां—यम नियमानाम् वितर्का हिंसादयस्तैर्बाधने सति तेषां प्रति-

पश्चात् विरोधिनः भावयश्चिन्तयेत् यदा चास्य योगिनोऽहनिष्यामि ब्राह्मणमनृतमपि वदिष्यामि परस्वमपि हरिष्यामि परदारांश्चाभिगमिष्यामि भोगसाधनानि ग्रहीष्यामि सृज्जलादिनोपस्थ करपादादीनि न निर्मलीकरिष्यामि मनश्च विपुलादिषु योक्ष्यामि सत्यपि भोगसाधनेऽधिक मादास्यामि शीतोष्णादि द्वन्द्वान्न सहिष्ये व्रतमपि न करिष्यामि पवित्र मन्त्रजपं न करिष्याम्यध्यात्म शास्त्रं नाध्येष्यामि—ईश्वरार्पणं न करिष्यामि—इति हिंसाद्या वितर्का यदा बाधेरंस्तदैवं चिन्तयेत्। हन्तातीवोल्वणसंसारांगार तप्ताङ्गेन योगाग्रहमाह गृहीत बुद्धिना मया महदायासेनासादिता हिंसादीनपहाय योगधर्म्माः कथमल्पस्य कृते तान्युपाददानः श्वतुल्यो न भविष्याम्यतो नैते पुनस्स्वीकार्य्या येन भूयस्संसारांगारेषु परिपचेयमिति ॥ १७ ॥ हिंसादीनां स्वरूपं भेदं कारण प्रकारांश्च क्रमेण दर्शयति—। "हिंसादय" इति ।

हिंसाद्योवितर्काश्स्युः कृतकारितमोदिताः ।
मृदुमध्याधिमात्राश्च लोभक्रोधादि पूर्वकाः । १८ ॥

वितर्का इति स्वरूपस्य दर्शनम् । कृतकारित मोदिता इति भेदस्य । मृदुमध्यादि मात्राश्चेति प्रकारस्य । लोभक्रोधादि पूर्वकाइति कारणस्य । आदिनामोह

परिग्रहः। हिंसा कृता-कारिता-अनुमोदिता च तत्र कृता स्वातुष्ठिता-कारिताऽन्येनानुष्ठापिता अनुमोदिता केनचिद्धिंसायां कृतायां साध्वनुष्ठितमानुमन्यते-ऽनुमोदनम्। सा प्रत्येकं लोभादि पूर्वकत्वभेदेन त्रिधेति नवविधा हिंसा सा नवविधापि प्रत्येकं मृद्वादिभेदेन त्रिधेति सप्तविंशतिधा हिंसा सा सप्तविंशतिधापि पुनः मृद्वादि भेदेन प्रत्येकं त्रिधेत्येव मेकाशीतिधा हिंसा। तथाहि—कृतहिंसा १ कारितहिंसा २ अनुमोदित हिंसा ३ लोभजकृत हिंसा १ क्रोधजकृतहिंसा २ मोहजकृत हिंसा ३ लोभजकारितहिंसा ४ क्रोधजकारित हिंसा ५ मोहजकारितहिंसा ६ लोभजानुमोदित हिंसा ७ क्रोधजानुमोदितहिंसा ८ मोहजानुमोदितहिंसा ९ मृदुलोभजकृत हिंसा १ मध्यलोभजकृत हिंसा २ तीव्रलोभजकृत हिंसा ३ मृदुक्रोधजकृत हिंसा ४ मध्यमक्रोधजकृत हिंसा ५ तीव्रक्रोधजकृत हिंसा ६ मृदुमोहजकृत हिंसा ७ मध्यमोहजकृत हिंसा ८ तीव्रमोहजकृत हिंसा ९ मृदुलोभजकारित हिंसा १० मध्यलोभजकारित हिंसा ११ तीव्रलोभज कारित हिंसा १२ मृदुक्रोधजकारित हिंसा १३ मध्य क्रोधजकारित हिंसा १४ तीव्रक्रोधजकारित हिंसा १५ मृदुमोहजकारित हिंसा १६ मध्यमोहजकारित

हिंसा १७ तीव्रमोहजकारित हिंसा १८ मृदुलोभजानुमोदितहिंसा १९ मध्यलोभजानुमोदित हिंसा २० तीव्रलोभजानुमोदित हिंसा २१ मृदुक्रोधजानुमोदित हिंसा २२ मध्यक्रोधजानुमोदित हिंसा २३ तीव्रक्रोधजानुमोदित हिंसा २४ मृदुमोहजानुमोदित हिंसा २५ मध्यमोहजानुमोदित हिंसा २६ तीव्रमोहजानुमोदित हिंसा २७ मृदु मृदुलोभजकृतहिंसा १ मध्यमृदुलोभजकृत हिंसा २ तीव्रमृदुलोभजकृत हिंसा ३ मृदुमध्यलोभजकृत हिंसा ४ मध्यमध्य लोभजकृत हिंसा ५ तीव्रमध्यलोभजकृत हिंसा ६ मृदुतीव्रलोभजकृत हिंसा ७ मध्यतीव्रलोभजकृत हिंसा ८ तीव्रतीव्रलोभजकृत हिंसा ९ मृदुमृदुक्रोधजकृतहिंसा १० मध्यमृदुक्रोधजकृत हिंसा ११ तीव्रमृदुक्रोधजकृत हिंसा १२ मध्यमध्यक्रोधजकृत हिंसा १४ तीव्रमध्यक्रोधजकृत हिंसा १५ मृदुतीव्रक्रोधजकृत हिंसा १६ मध्यतीव्रक्रोधजकृतहिंसा १७ तीव्रतीव्रक्रोधजकृत हिंसा १८ मृदुमृदुमोहजकृत हिंसा १९ मध्यमृदुमोहजकृत हिंसा २० तीव्रमृदुमोहजकृत हिंसा २१ मृदुमध्यमोहजकृत हिंसा २२ मध्यमध्यमोहजकृत हिंसा २३ तीव्रमध्यमोहजकृत हिंसा २४ मृदुतीव्रमोहजकृतहिंसा २५ मध्यतीव्रमोहजकृत हिंसा २६ तीव्र

तीव्रमोहजकृत हिंसा २७ मृदुमृदुलोभजकारित हिंसा २८ मध्यमृदुलोभजकारित हिंसा २९ तीव्रमृदुलोभजकारित हिंसा ३० मृदुमध्यलोभजकारित हिंसा ३१ मध्यमध्यलोभजकारित हिंसा ३२ तीव्रमध्यलोभजकारित हिंसा ३३ मृदुतीव्रलोभजकारित हिंसा ३४ मध्यतीव्रलोभजकारित हिंसा ३५ तीव्रतीव्रलोभजकारित हिंसा ३६ मृदुमृदु क्रोधजकारित हिंसा ३७ मध्यमृदुक्रोधजकारित हिंसा ३८ तीव्रमृदुक्रोधजकारितहिंसा ३९ मृदुमध्यक्रोधजकारितहिंसा ४० मध्यमध्य क्रोधजकारित हिंसा ४१ तीव्रमध्यक्रोधजकारित हिंसा ४२ मृदुतीव्रक्रोधजकारित हिंसा ४३ मध्यतीव्र क्रोधजकारित हिंसा ४४ तीव्र तीव्र क्रोधजकारित हिंसा ४५ मृदुमृदुमोहजकारित हिंसा ४६ मध्यमृदु मोहजकारितहिंसा ४७ तीव्रमृदुमोहजकारित हिंसा ४८ मृदुमध्यमोहजकारित हिंसा ४९ मध्यमध्यमोहजकारित हिंसा ५० तीव्रमध्यमोहजकारित हिंसा ५१ मृदुतीव्रमोहजकारित हिंसा ५२ मध्यतीव्रमोहजकारित हिंसा ५३ तीव्रतीव्रमोहजकारित हिंसा ५४ मृदुमृदुलोभजानुमोदितहिंसा ५५ मध्यमृदुलोभजानुमोदित हिंसा ५६ तीव्रमृदुलोभजानुमोदित हिंसा ५७ मृदुमध्यलोभजानुमोदित हिंसा ५८ मध्यमध्यलोभ

जानुमोदित हिंसा ५९ तीव्रमध्यलोभजानुमोदित हिंसा ६० मृदुतीव्रलोभजानुमोदित हिंसा ६१ मध्य तीव्रलोभजानुमोदित हिंसा ६२ तीव्रतीव्र लोभजानुमोदित हिंसा ६३ मृदुमृदुक्रोधजानुमोदित हिंसा ६४ मध्यमृदुक्रोधजानुमोदित हिंसा ६५ तीव्रमृदुक्रोधजानुमोदितहिंसा ६६ मृदुमध्यक्रोधजानुमोदितहिंसा ६७ मध्यमध्यक्रोधजानुमोदित हिंसा ६८ तीव्रमध्य क्रोधजानुमोदित हिंसा ६९ मृदुतीव्रक्रोधजानुमोदितहिंसा ७० मध्यतीव्रक्रोधजानुमोदित हिंसा ७१ तीव्रतीव्र क्रोधजानुमोदित हिंसा ७२ मृदुमृदुमोहजानुमोदित हिंसा ७३ मध्यमृदुमोहजानुमोदित हिंसा ७४ तीव्र मृदुमोहजानुमोदित हिंसा ७५ मृदुमध्यमोहजानुमोदित हिंसा ७६ मध्यमध्यमोहजानुमोदित हिंसा ७७ तीव्रमध्यमोहजानुमोदित हिंसा ७८ मृदुतीव्रमोह जानुमोदित हिंसा ७९ मध्यतीव्रमोहजानुमोदित हिंसा ८० तीव्रतीव्रमोहजानुमोदित हिंसा ८१ काल समय जाति जन्तु भेदादपरिसंख्येयेयं हिंसेति सुखेकाशीतिप्रकारा दर्शिता एवमस्तेयादिष्वपि योज्यम् ॥१८॥

दुःखाज्ञानान्तफलकतयानेते त्याज्याइति प्रतिपक्षभावनामाह—। दुःखादीति।

दुःखादिफलमेषांचेतिप्रतिपक्षभावनम्।
अहिंसायां प्रतिष्ठायां वैरत्यागोऽस्य सन्निधौ।१९॥

यमनियमादीनामभ्यासोत्कर्षेण यास्सिद्धयोभवन्ति ताः क्रमेण दर्शयन्नादावहिंसासिद्धिं दर्शयति—।अहिंसायामिति। अहिंसां भावयतोऽस्य यदाऽहिंसा प्रतिष्ठिता भवति तदा सहज विरोधिनामप्यहिनकुलादीनामस्य सन्निधावन्योन्य वैरत्यागो भवति। यद्वावैरत्यागोऽस्यसन्निधावित्यस्याय मर्थः। सिंहाहिनकुलादिभिस्तत्तास्ययोगिनः सन्निधौ वैरत्यागोभवति। अहिंसां भावयन्तमेनं नकुधम्मोऽहि नकुल सिंह व्याघ्रादयस्तैस्तत्राभयं विहरति॥ १९॥ सत्याभ्यासोत्कर्षफलमाह—। "क्रियाणा" मिति।

क्रियाणां फलमाश्रयते यदा सत्यं प्रतिष्ठते।
रत्नान्यस्योपतिष्ठन्ते स्तेयप्रतिष्ठिनिर्यदा। २०॥

यदाऽस्यसत्य प्रतिष्ठा भवति तदाऽस्य वचनादन्योऽकत्वापि यागादिकाः क्रियास्तत्फलमश्नुते किन्तु तस्य साध्यं सत्तु सत्यसिद्धस्याऽप्रतिहतवाग्भवति धार्मिको भूया इति वदति यदा कस्यचिद्भवति तदा स धार्मिकः। स्वर्गंप्राप्नु,हि—इतिब्रूते यदा,स स्वर्गं प्राप्नोति। अस्तेयोत्कर्षस्य फलमाह। "रत्नानीति"। अस्तेयमभ्यस्यतोऽस्य योगिनस्तदभ्यास प्रकर्षान्निरभिलाषस्यापि सर्वतोरत्नान्युपतिष्ठन्त इति॥ २०॥ योब्रह्मचर्यमभ्यस्यति तस्य

तत्प्रकर्षान्निरतिशय सामर्थ्यलाभो भवतीत्याह—। "ब्रह्मचर्य्येति"।

ब्रह्मचर्यं प्रतिष्ठायां वीर्य्यलाभोऽपरिग्रहे ।
स्थैर्य्ये जन्मकथन्तायास्संबोधस्तस्य जायते । २१ ॥

वीर्य्यनिरोधोहि ब्रह्मचर्य्यं तदभ्यासाच्छरीरेन्द्रिय मनस्सु निरतिशय वीर्य्यलाभो भवति यल्लाभादपरिमितं बोधमुपलभ्यान्ये ष्वर्पितसाधात्तु समर्थो भवति। भोगसाधनपरिग्रह एव परिग्रहो न शरीरमात्रपरिग्रहः । भोगसाधनपरिग्रहे सत्येव वृत्तीनां बहिर्मुखतया प्रवृत्तेर्ना ऽसम्भवोऽपरिग्रहस्थैर्य्येतु जन्मकथन्ताबोधस्सुकर इत्याह—। "अपरिग्रह" इति। कथंसत्यस्य भावः कथन्ता जन्मनः कोऽहमासं कथमहमासं किं स्विदिदं कथं स्विदिदं केभविष्यामः कथं वा भविष्याम इत्येवं रूपा कथन्ता जन्मकथन्ता तस्याः सम्बोधः सम्यग्ज्ञान मपरिग्रहं भावयतो भवतीति ॥२१॥ यमस्थैर्य्ये सिद्धीरभिधाय नियमस्थैर्य्ये सिद्धीरभिदधानस्तावच्छौच सिद्धिमाह—। स्वेति।

स्वशरीरे घृणा शौचादसंसर्गः परैस्तथ ।
सत्वशुद्धिस्तदुत्कर्षं स्वै काग्र्यमिन्द्रियजेतृता । २२
आत्मदर्शन योग्यत्वं सुखलाभोह्यनुत्तमः ।
सन्तोषाज्जायते कायेन्द्रिय प्रसाधकन्तपः । २३ ॥

भवेत्स्वाध्ययनादिष्टदेवतासम्प्रयोजनम् ।

योगसिद्धिर्गुरौ भक्त्या सुस्थिरं सुखमासनम् ॥ २४॥

मृज्जलादिभिः कायक्षालनेनापि तच्छुचित्वमपश्यतोऽस्य शौचात्स्वशरीरे नेदं शरीरं वर्णयुतैरपि स्प्रष्टुं भवितुम् इति यतस्स्थान बीजोपष्टम्भनिधनैश्योऽशुचीत्येवं विधा घृणा जायते ततश्चैव दोषदर्शिनः परैस्तद्भिन्नैस्सार्द्धं मसंसर्गोऽसम्बन्धः । शौचस्य फलमाह—। "सत्त्वेति" । सत्त्वस्य बुद्धितत्त्वस्य शुद्धिः—रजस्तमोभ्यामनभिभवः । तदुत्कर्षः सत्त्वस्याधिक्यम् । ऐकाग्र्यंचेतसःस्थैर्यम् । इन्द्रियजित्वता विषयेभ्य इन्द्रियवृत्तिविच्छेदः ॥ २२ ॥ आत्मदर्शनयोग्यत्वं पुरुषदर्शने बुद्धितत्त्वस्य सामर्थ्यम् । एते क्रमेण कार्य्य कारण भावमुपगता जायन्ते । सन्तोषफलमाह—सुखेति। सन्तोषाभ्यास वशात्तथा विधातीवोत्तम सुखलाभोजायते यस्य वाह्यसुखमयुतांशेनापि न सम्भवति। समभ्यस्समानं तपश्चेतसः क्लेशादि लक्षणाशुद्धि संचयद्वारा कायेन्द्रियाणामुत्कर्षमादधातीति तपसः फलमाह—। कायेति । कायेन्द्रिय प्रसाधकम् तयोस्सिद्धिकारणम् तत्र कायस्यसिद्धिर्महत्त्वाणुत्वादि यथेच्छम् । इन्द्रियाणां च सूक्ष्मव्यवहित विप्रकृष्ट दर्शन सामर्थ्यं तपसस्सम्पद्यत इतिभावः ॥ २३ ॥ स्वाध्यायफलमाह— भवेत्स्वाध्ययनादिति। मन्त्रजपादि लक्षणा-

तत्रभावनादिष्टाया अभिलषिताया देवतायाः सम्प्रयोजनं सम्प्रयोगः प्रत्यक्ष दर्शनम्भवति न केवलं दर्शनमात्रमपितु कार्य्येऽपि प्रवर्त्तते । प्रणिधान फलमाह—। योगेति । गुरौ ईश्वरे । भक्तिः सर्वक्रियाणां फलानांकाञ्चितया समर्पणेन तस्यैवाराधनात्तज्ज्ञानात्—योगसिद्धिः समाधिसिद्धिर्भवति सहसिद्धिभिर्यमनियमानुक्त्वाऽऽसनमभिधत्ते—सुस्थिरमिति । यदाऽऽसनं सुस्थिरं निष्कम्पं सुखमयञ्चभवति तदा योगाङ्गभावं भजते—आसनानि तु पद्मासनं वीरासनं भद्रासनं स्वस्तिकासनं दण्डासनां सोपाश्रयं पर्य्यङ्कं क्रौञ्च निषदनं मयूरासनमित्यादीन्येष विशेषस्तु मत्कृत योगप्रदीप कलिकायामिति तत्रैव द्रष्टव्योन पुनरिह प्रपञ्च्यते ॥ २४ ॥ आसनोपायमाह—। अनन्तस्येति ।

अनन्तस्य समापत्त्या कृतयाशिथिलया तथा ।
ईरितमासनस्थैर्य्यं ततोद्वन्द्वैरधर्षणम् । २५ ॥

अत्र षष्ठार्थो विषयता तस्यां प्रकृतेर्निष्ठतयान्वयस्तस्याश्च स्वनिरूपकविषयिताश्रयत्व सम्बन्धेन समापत्तौ तथाचानन्तनिष्ठविषयता निरूपक विषयिताश्रयसमापत्त्येत्यर्थः अनन्तश्च शेषो विष्णुर्वा यथाभिमतो ग्रेयः कृत्या शिथिलया प्रयत्नशैथिल्येन अक्लेशेनेत्यर्थः । आसनस्य स्थिरता भवति स्थिरे चासनेऽन्तरं योगिनोद्वन्द्वैः शीतोष्णादिभिः

अधर्षणाऽनभिघातोऽनभिभवो भवति ॥ २५ ॥ आसन-स्थैर्ये सति श्वास प्रश्वासयोर्गतिविच्छेदलक्षणः प्राणा-यामो भवतीत्याह—। सतीति ।

सति तस्मिंश्च विच्छेदः श्वासप्रश्वासयोर्गतेः ।
प्राणायामस्स वै बाह्याभ्यन्तरस्तम्भवृत्तिकः । २६ ॥

बाह्यस्य वायोराचमनं श्वासः कोष्ठस्य वायोर्नि-स्सारणं प्रश्वासः । तयोर्गतेर्गमनरूप क्रियायाः विच्छे-दोऽभावः प्राणायाम उच्यते स च त्रिधः । बाह्यवृत्तिको रेचकः अभ्यन्तर वृत्तिकः पूरकः । स्तम्भवृत्तिकः कुम्भकः ॥ २६ ॥ देशकालसङ्ख्याभिरयं प्राणायामोदीर्घ सूक्ष्मसं-ज्ञोभवतीत्याह—। दीर्घेति ।

दीर्घसूक्ष्मवृत्तिश्चातस्संख्यासमयदेशतः ।
चतुर्थो विषयाक्षेपी भा[illegible]वारवृतिस्ततः । २७ ॥

सङ्ख्यया—इयतोवारान् कृतः। समयेन—षट्त्रिंशन्मात्रा-दिना कालेन। देशेन द्वादशाङ्गुल प्रमाणेन । एवंविध भेदोपलक्षितो दीर्घ सूक्ष्मसंज्ञां लभते तत्र दीर्घकाला-दिना दीर्घसंज्ञामल्पकालादिना सूक्ष्म संज्ञामिति । त्रीन् प्राणायामानभिधाय चतुर्थमाह—। चतुर्थ इति । विषयाक्षेपी—द्वादशाङ्गुल्यादिपर्यन्तोबाह्यो विषयः । हृदयादिराभ्यन्तरो विषयः एतौद्वावाक्षिप्यभवतीत्यर्थः । अयमपि स्तम्भवृत्तिक सदाकुम्भक उच्यते पूर्वस्मात्कुम्भका-

दस्यायं विशेषः। पूर्वः श्वासप्रश्वासयोर्विषयानवधारणा-
दक्रमेण जायते ऽयन्तुश्वासप्रश्वासयोर्विषयावधारणक्रमे-
णाभ्यासाचेप पूर्वकः प्राणायामः। अस्मात्किंभवतीत्याकां-
क्षायां तत्फलमाह—। भासेति। भासः प्रकाशः बुद्धेः
सात्त्विकः परिणामः। येन यथावद्योगी जानाति तस्य—
आवारः—आवरणं संसारकारणं क्लेशस्वरूपं कर्म्म—
तस्य क्षतिर्निवृत्तिः ततस्तस्मात्प्राणायामाद्भवतीत्यर्थः
॥ २७ ॥ प्राणायामैः क्षीणदोषं मनोयत्र धार्य्यते तत्र स्थि-
रंभवति न पुनर्विक्षेपं भजते इति प्राणायामस्य फलान्तरं-
दर्शयन् प्रत्याहारस्य स्वरूपफलेदर्शयति—। धारणास्विति।

धारणासु च योग्यत्वं मनसश्चित्तरूपतः।
प्रत्याहारो हृषीकाणां परमा वश्यता ततः। २८॥

इति योगमकरन्दे साधनाख्यो द्वितीयः पादः ॥ २ ॥

विषयाभिमुख्येन वर्त्तमानानां हृषीकाणामिन्द्रि-
याणां विषयाभिमुख्यं परित्यज्य या चित्तरूपता चित्त
स्वरूपानुकारिता चित्तनिरोधानुरूपता स प्रत्याहारः।
इन्द्रियाणि प्रति—प्रतीपानि—आह्रियन्ते यस्मिन्स
इति विग्रहः। अयम्भावः चित्त निरोधेन विषयेभ्योनि-
रुद्धानी न्द्रियाणि नोपायान्तरमपेक्षन्ते—इन्द्रिया-
न्तरनिरोधेत्विन्द्रियान्तर निरोधवदुपायमपेक्षन्त इति
चित्त स्वरूपानुकारितैवेन्द्रियाणां प्रत्याहारस्तत एव

मभ्यस्यमानः तत्प्रत्याहारात् । इन्द्रियाणां तथा परमा उत्कृष्टा वश्यता आयत्तता सम्पद्यते वाह्यविषयाभिमुखलांनीयमानान्यपि न वाह्यविषयेषुगच्छतीति ।

इति श्रीयोगमञ्जर्य्यां योगमकरन्दव्याख्यानरूपायां-कुलयशस्विशास्त्रिप्रणीतायांद्वितीयःपादः ॥ २ ॥

## तृतीयःपादः।

पूर्वोक्ताङ्गेषुधारणादीनां विशेषेण स्वरूपादि दर्शयितुमपरं विभूतिपादमारभमाणोयमनियमासन प्राणायाम प्रत्याहारसिद्ध्यन्तरं निर्वाधे देशे ऋजुकायेन जितद्वन्द्वेन सम्प्रज्ञातसमाधेरभ्यासाय चेतसस्स्थिरीकरणं कर्त्तव्यमितिधारणामाह-। धारणेति ।

धारणा देशबन्धस्स्याद्ध्यानं चित्तैकतानता ।
समाधिरर्थनिर्भासा त्रयमेकत्रसंयमः ॥ १ ॥

नाभिचक्रे हृदयपुण्डरीके मूर्द्धि ज्योतिषि नासिकाग्रे जिह्वाग्रे इत्येवमादिष्वाभ्यन्तरदेशेषु ध्रुवे चन्द्रे सूर्य्ये पर्वताग्रे इत्येवमादिषु वाह्यदेशेषु वा विषयान्तरपरिहारेणयच्चेतसस्स्थिरीकरणं सा धारणेत्युच्यते । ध्यानमाह—। ध्यानमिति । यदेव धारणायामालम्बनी कृतं तस्मिन्नालम्बने या चित्तस्यैकतानता—विसदृशप्रत्ययप्रवाहपरिहारेण सदृशप्रत्यय प्रवाहीकरणं मनसस्तद्ध्यानम् । ध्यानं यदाऽर्थाकारसमावेशादुद्भूतार्थस्वरूपमर्थाकारेणैवनिर्भासते तदा तदेव समाधिरुच्यत इति समाधिमाह—समा-

धिरिति। सम्-सम्यक्। आधीयते—एकाग्रीक्रियते यत्रम-नस्ससमाधिः। ध्यानात्समाधेरयंविशेषः। ध्याने ध्यातृध्ये-यध्यानरूपा त्रिपुटीभासते समाधौ तु ध्येयस्वरूपार्थाकार निर्भासञ्चित्तं न तत्र सा भासत इति। नचाङ्गिनोपि सम्प्र-ज्ञात समाधेरर्थनिर्भासकत्वे नाङ्गाङ्गिनोरभेदः प्रसक्त इति, अङ्ग सामधौ निश्शेषतोध्येयरूपस्याभानात्। भवे-त्तदाङ्गाङ्गिनोरभेदश्चेत्स्यादङ्गसमाधौ निश्शेषतोध्येय-रूपभानमङ्गिनि तु सम्प्रज्ञाते साचात्कारोदये निश्शेष-तोध्येयस्वरूपभानसम्भवादङ्ग समाध्यविषय विषयाणां च भानादित्यङ्गाङ्गिनोर्विभागः। धारणादित्रयस्य तान्त्रि-कींपरिभाषामाह—। त्रयमिति। एकत्र—एकस्मिन्वि-षये धारणाध्यानसमाधिलक्षणं त्रिकं वर्त्तमानंसंयम उच्यते ॥१॥ ज्ञातव्य विवेकरूपप्रज्ञायास्संयम जयात्प्रसरो भवती त्याह—। प्रज्ञेति।

प्रज्ञालोकोजयात्तस्य नियोगस्तस्यभूमिषु।
अन्तरङ्गं त्रयंतेभ्योवहिरङ्गं परत्र च ॥ २ ॥

तस्य-संयमस्य। जयात्—उत्कृष्टाभ्यासेनस्वायत्ती-करणात्। प्रज्ञायास्समाधि प्रज्ञायाः। आलोकः प्रका-शः प्रसरो भवति। संयमस्योपयोगमाह—। नियोग इति। तस्य—संयमस्य। भूमिषु स्थूलसूक्ष्मालम्बन भेदे-नावस्थितासु चित्तावस्थासु। नियोगोविनियोग उपयोगः

संयमेन पूर्वां पूर्वां भूमिञ्जित्वा परांपरांजयेद् । नह्य-कृतसंयमोभूमिविजयी भवति नहि संयमसन्तराजित पूर्वंभूमिरपराजितुमीष्टे येन संयमस्यानुपयोगोभूमिषु भवेत् । पूर्वापर भूमिसत्तायान्तुयोग एवमानं नहि योग-मन्तराऽस्याभूमेरियमनन्तरा भूमिरित्यवगन्तुं शक्यते— तथाचोक्तमिदश्चार्षे । "भूमेरस्या इयमनन्तरा भूमि-रित्यत्र योग एवोपाध्यायः कथमेवमुक्तं योगेन योगोज्ञात-व्यो योगो योगात्प्रवर्त्ततेयोऽप्रमत्तस्तु योगेन स योगे रमते चिरमिती " तस्मिद्वसंयमस्य भूमिषु विनियोगः । तदेतत्संयमसंज्ञकन्धारणादियोगाङ्गत्रयं पूर्वेभ्योयोगाङ्गेभ्यः पारम्पर्य्येण समाधेरुपकारकेभ्योऽन्तरङ्गमित्याह—। अ-न्तरङ्गमिति । तेभ्यः पूर्वोक्तेभ्योयमादिभ्यः पञ्चभ्यः । धारणाध्यान समाधिलक्षणं त्रयं सम्प्रज्ञात समाधेरन्तरङ्गं सम्प्रज्ञातसमाधि स्वरूप निष्पादकत्वात् । यद्यपि धार-णादित्रयस्य सम्प्रज्ञात समाध्यन्तरङ्गत्व मुक्तं तथापिनैषां त्रयाणामेव समाध्यन्तरङ्गत्वमेषामेकस्मिन्विषयसत्त्वे पि-एकदैकत्र सत्त्वाभावान्नहि ध्यानदशायां प्रत्ययैकतान-तारूपा धारणा नहि धारणादशायां स्वरूपतोध्यानं नहि समाधिदशायां स्वरूपतोध्यानधारणे नहि ध्यानधारणाद-शायां स्वरूपतस्समाधिस्सम्भवति । यदितु समाधि दशायां त्रयाणां स्वीकारः कार्य्यं कारणस्यानुस्यूतत्वात्तदापि ध्या-

नधारणयोरन्तरङ्गत्वं कारणरूपेण तयोस्तत्रानुगतत्वेपि-न स्वेनरूपेण सम्प्रज्ञातसमाधि जनकत्वमपितु समाधि-स्वरूपकार्य्येणेति न तयोरन्तरङ्गत्वं यदि च समाधिरपि धारणाध्यानयोः परिपाकावस्थेति समाधिर्नताभ्याम-तिरिच्यतइत्युच्यते तदाध्यानमपि धारणायाः परिपाका-वस्थेति न धारणास्वरूपतोतिरिक्तमिति परिपक्वधारणै-व सम्प्रज्ञात समाधिजनिका तथाच ध्यानसमाध्योःपृथक् समाधरङ्गत्व संकीर्त्तनव्यतिरिति योगस्याष्टाङ्गसाधर-त्ववादोपि व्याहन्येततद्वादसंरक्षणायस्वरूपतोऽवस्थातो-वाकथञ्चिदपि तेषां भेदानुसरणे देशबन्धरूपा धारणा-ध्यात्व धेयध्यानकलनावद्ध्यानम्-ध्यातृ धेय धानरूप-कलना रहितार्थं मात्रावभासकस्समाधिरिति, तेषां त्रयाणामेकदैकत्र सत्त्वासम्भव इति न ध्यानधारणयो-स्सम्प्रज्ञात समाधरन्तरङ्गत्वमपितु समाधेः । धारणादि त्रिकस्य सम्प्रज्ञातसमाधरन्तरङ्गत्वोक्तिस्तु यमाद्यपेक्षया-सङ्गच्छत इति धारणध्यान समाधि लक्षणत्रयं पूर्वेभ्योय-मादिभ्यस्सम्प्रज्ञात समाधावन्तरङ्गं परन्त-सम्प्रज्ञात-समधरनन्तर जायमानासम्प्रज्ञातसमाधौ वहिरङ्गं पार-म्पर्य्येणोपकारकत्वात्—तत्र साक्षादुपकारकस्य सम्प्रज्ञा-तस्यान्तरङ्गत्वादिति ॥२॥ धारणादित्रिकस्य विशेषमभि-धाय सम्प्रतिचे तसस्त्रीन्परिणामान्पुरुषातिरिक्तनिखि-लस्य परिणामित्वं दर्शयितुमभिधत्ते । निरोध इति ।

निरोधश्शान्तवाहीकस्समाध्यैकाग्रते तथा।
परिणामस्त्रिधःप्रोक्तश्चेत सोयंमनीषिभिः॥ ३॥

मनीषिभिर्योगिभिश्चित्तस्य परिणामधर्म्मकस्य त्रिधःत्रिप्रकारः परिणामः-पूर्वावस्थापरित्यागेनावस्थान्तरप्राप्तिरूपः। प्रोक्तः-कथितः। तद्यथा निरोधपरिणामः १ समाधिपरिणामः २ एकाग्रतापरिणामः ३ यदा व्युत्थान संस्कारास्तिरोधतेनिरोधसंस्काराश्चप्रादुर्भवन्ति तदानिरोधलक्षण चित्तस्योभयवृत्तित्वादन्वयोयस्सनिरोधपरिणामः। सच सदृशप्रत्यय प्रवाहेण चेतसश्शान्तिमाधत्ते। यदा सर्वार्थरूपस्य विक्षेपस्य क्षय एकाग्रतायाश्चाविर्भावस्तदैकाग्रतालक्षणचित्तस्यान्वयि तयावस्थानं समाधिपरिणाम स्सचविक्षेपं प्रतिक्षिप्य चित्तैकाग्रं विधत्ते पूर्वस्मादस्यायं विशेषस्तत्र व्युत्थान संस्काराणां निरोध उद्भवश्चोत्तराणां निरोध संस्काराणामिह तु विक्षेपस्यात्यन्त प्रतिक्षेपाद् व्युत्थान संस्कोराणांपुनरनुत्पाद एकाग्रतासमुद्भवः। यदा समाहित चित्तस्यैकोवृत्तिविशेषः शान्तोऽपरस्तु वर्त्तमानस्तदोभयत्र समाहित चित्तस्यान्वयित्वेनावस्थानमेकाग्रतापरिणामस्सचैकाग्रतायादृढीकरणेनाचिरेण समाधिमुद्भावयति। समाधि परिणामादस्यायं विशेषः समाधि परिणामे विक्षेपात्यन्त प्रतिक्षेपेणैकाग्रतासमुत्पादोऽत्रतुद्वावपि समाहित चित्तत्वेनैकरूपाल-

स्थनत्वेन च सदृशौ प्रत्ययावित्युक्तस्त्रैतसस्त्रिधःपरिणामः । चित्तपरिणामवद्भूतेन्द्रियेष्वपि धर्म्मलक्षणावस्था परिणामाःपरिणामसाम्याद्‌बोद्धव्या इत्याह । भूतेन्द्रियेष्विति ।

भूतेन्द्रियेषु तेनैव परिणामाः प्रकीर्त्तिताः ।
धर्म्मी धर्म्मानुपातीस्याद्धर्म्माश्शान्तादयोमताः ॥४॥

तेन—त्रिविधोक्तचित्तपरिणामेन । भूतेषु स्थूलसूक्ष्मेषु पृथिव्यप्तेजोवाय्वाकाशेषु । इन्द्रियेषु-श्रोत्रत्वग्घ्राणदृग्जिह्वा वाग्दोर्मेढ्राङ्घ्रिपायुषु । परिणामाः—धर्म्मलक्षणावस्थारूपास्त्रयः । प्रकीर्त्तिताः । तत्र धर्म्मपरिणामोनामावस्थितस्य धर्म्मिणः पूर्वधर्म्मत्यागेन धर्म्मान्तरेणावस्थानम् । अनागतत्वं विहाय वर्त्तमानत्वेन, वर्त्तमानत्वं च विहायातीतत्वेनावस्थानं लक्षणपरिणामः । नहि क्षणमप्यपरिणम्यावतिष्ठते चित्यतिरिक्तं चलवृत्तमिति सर्वे चितिव्यतिरिक्ताः परिणामिनः । अथ कोयं धर्म्मीयस्यैते परिणामा इत्यपेक्षायां धर्म्मिस्वरूपमाह । धर्म्मीति । शान्तादय इति भाव प्रधानतया निर्देशो यथाद्व्येकयोर्द्विवचनैकवचने इत्यत्रान्यथाद्व्येकेष्वितिस्यात् । आदिना चोदिताव्यपदेश्यादीनां स्वीकारस्तथाच कृतस्वव्यापारकत्वं शान्तत्वम् । क्रियमाणव्यापारकत्वमुदितत्वम् । करिष्यमाणव्यापारकत्वमव्यपदेश्यत्वम् । धर्म्मान्योऽनुपतति—अनुवर्त्तते-स्वीकुरुते । सधर्म्मी यथाहेमसृत्पिण्डा-

टिकं मृत्तिखण्डोघटरूपतो धर्म्मान्तरमुपसम्पद्यमानो धर्म्मतः परिणमते स च घटाकारो मृत्तिकस्य धर्म्मपरिणामः। स च शान्तत्वादीन्धर्म्मानतुवर्त्तमानस्तदपेक्षया धर्म्मीत्युच्यते मृत्तिखण्डस्यघटरूप धर्म्मापेक्षया। स एषघटाकारोऽनागतलक्षणंहित्वा वर्त्तमानलक्षणं, वर्त्तमानलक्षणं च हित्वातीतलक्षणं,यदा प्रतिपद्यते तदा लक्षणतःपरिणमतेऽतीतत्वाद्ययस्यघटस्य लक्षणपरिणामोयदपेक्षया घटस्य धर्म्मित्वमुक्तम्। तस्यैव घटस्य नवपुराणताद्यवस्था अवस्था परिणामः। नवपुराणत्वाद्यपेक्षयापि घटोधर्म्मीतिसर्वस्वधर्म्मानतुवर्त्तमानो धर्म्मीत्युच्यते ॥४॥ ननु कथमेकस्य धर्म्मिणोऽनेकपरिणामाः परिणामनानाविधत्वेज्ञापकहेतोरभावादितिज्ञापकमाह—। परिणामान्यतेति।

परिणामान्यताहेतुः क्रमभेदः प्रकीर्त्तितः।
अतीतानागत ज्ञानं त्रिरूत्क्षयसंयमात् ॥ ५ ॥
शब्दार्थं प्रत्ययानां च सङ्कारोऽध्यासहेतुकः।
सर्वभूतरुतज्ञानं तत्प्रविभाग संयमात् ॥ ६ ॥

धर्म्माणांः क्रमस्तस्ययो भेदःप्रतिक्षणमन्यत्वं परिणामान्यतायां परिणाम नानाविधत्वे हेतुः—ज्ञापकम्। क्रमस्य समनन्तरं जायमानोधर्म्मः। यथामृत्चूर्णस्य तस्याः पिण्डस्तस्य कपालस्तस्यघटएष धर्म्म परिणामक्रमउच्यते लक्षणपरिणामक्रमस्य घटस्यानागत भावाद्वर्त्तमान भावः। वर्त्तमान

भावादतीत भावः । अतीतस्य च नास्ति क्रमस्तदनन्तर-
धर्म्माभावाच्च प्राच्यमस्त्यतीतस्य क्षणनन्तरो वर्त्तमान
इति, मुक्तानां पुनस्संसारप्रसक्तिः । मुक्तानां संसारहेतू-
पायैरतीतस्य वर्त्तमानत्वास्वीकारात्संसारोच्छेदोऽभिम-
तःसम्प्रतितस्यवर्त्तमानत्वाङ्गीकारान्मुक्तानां संसारप्रसक्ति
र्दुरुद्धरेतिनातीतस्य क्रमः । अवस्थापरिणामक्रमस्य घट-
स्याभिनवस्य जीर्णत्व पुराणत्वादिस्तथाच क्रमभेदश्चा-
प्यपरिणामभेदात्परिणममानधर्म्मिभेदोपि सम्भवति तद्य-
था सूक्ष्मक्रमश्चाप्यपरिणामभेदाच्चूर्णरूपधर्म्मिभेदः पिण्ड-
क्रमश्चाप्यपरिणामभेदान्मृद्रूपधर्म्मिभेदः । कपालक्रम-
श्चाप्यपरिणाम भेदात्पिण्डरूप धर्म्मिभेदः । घटक्रमश्चा
प्यपरिणामभेदात्कपालरूप धर्म्मिभेदः । एवमनागतादि-
क्रमश्चाप्यपरिणामभेदादपि परिणममानधर्म्मिभेदोऽव-
गन्तव्यः । यद्वा क्रमभेद इत्यत्र क्रमपदव्यपदेश्यः कालः ।
सम्भवति कालभेदादप्येकस्य धर्म्मिणोऽनेकपरिणामयो-
गितितिकालभेद एव परिणामान्यतायां हेतुः । इदानीं
धारणा ध्यानसमाधिरूपस्योक्त संयमस्य सिद्धीःप्रतिपाद-
यन्नादौ धर्म्मलक्षणावस्थापरिणाम संयमसिद्धिम्प्रतिपादय-
ति । अतीतेति । निरुक्तत्रयं धर्म्मलक्षणावस्थापरिणामलक्ष-
णं तत्र संयमात्साक्षात्क्रियमाणं परिणामत्रयं परिणममान
धर्म्मिषु तत्परिणामेषु चातीतानागत ज्ञानमुत्पादयति ।

एतेन वर्त्तमानेष्वपि परिणममानधर्म्मिं तत्परिणामेषु ज्ञानं सूचितं वेदितव्यं कण्ठतस्तदनुक्तिस्तु वर्त्तमानज्ञानस्य मध्यपातित्वेनोभयाभिधानेनैवाभिहितत्वात्सर्वसिद्धत्वाद्वा न च वर्त्तमानज्ञानस्य सर्वसिद्धत्वे योगिनस्तत्र को विशेषः इति साम्प्रतम्। योगिनस्संयमबलेन विप्रकृष्ट सन्निहित व्यवहितस्थूल सूक्ष्मभावेनावस्थितानां सर्वेषां वर्त्तमानानां परिणममानधर्म्मितद्धर्म्माणांज्ञान सम्भवात्। नहि विप्रकृष्टव्यवहितसन्निहित सूक्ष्मस्थूलभावेनावस्थिता वर्त्तमान परिणाम धर्म्मास्तद्वन्तोधर्म्मिणश्चार्वाग्दृशामकृतसंयमानां ज्ञानगोचरीभूतता भवितुमर्हिस्तस्मात्परिणामत्रय संयमा द्योगिनां कृतसंयमानामनागतागत वर्त्तमानातीत परिणममान धर्म्मितद्धर्म्माणां ज्ञान मुत्पद्यतेइति योगिनो विशेषः। निरुक्तत्रयसंयमादित्युक्त्या त्रिष्वेवपरिणामेषु संयमादतीतानागत वर्त्तमान ज्ञानं दर्शितं नतु प्रत्येकं संयमात्प्रत्येक संयमेतु धर्म्मपरिणाम संयमादतीतज्ञानं लक्षणपरिणाम संयमादनागतज्ञानमवस्थापरिणाम संयमाद्वर्त्तमान ज्ञानमिति क्रमः। न चास्य वैपरीत्यानङ्गीकारेकिन्नियामकमिति वाच्यम् वर्त्तमानतयाऽवस्थितस्यैव धर्म्मिणोऽभिनवत्व पुराणत्व कोमलत्व कठिनत्वाद्यवस्था सम्भवादित्यवस्थापरिणामसंयमेन वर्त्तमान ज्ञान सम्भवः। भविष्य-

त्वज्ञानंविना वर्त्तमान लक्षणत्वासम्भवादिति भविष्यद्भावेनावस्थितस्य लक्षणपरिणामेन ज्ञान संभवः । वर्त्तमानस्य धर्म्मिणः पूर्वं धर्म्म निवृत्तिमन्तराऽ तीतताऽ सम्भवादित्यतीततयाऽवस्थितस्य धर्म्मपरिणाम संयमेन ज्ञान सम्भव इत्युक्ताः परिणामत्रय संयमसिद्धयः ॥५॥ वर्ण्णध्वनिरूपशब्द सकलार्थानुगतरूपजाति गुणक्रियादि रूपार्थ तद्विषयक बोधानां बुद्ध्येकरूपतासम्पादनादन्योन्यं सङ्कीर्णत्वं तेषां प्रविभागं विधाय विभक्तोऽर्थः । विभक्तः प्रत्ययः विभक्तः शब्द इति, तस्मिन्प्रविभागे यः संयमंकरोति तस्य सर्वेषां मृगपशुपक्ष्यादीनामयं पशुरनेन शब्देनामुमर्थम्बोधयति—अयंविहगोऽनेनरवेणामुमाह्वयति अयंमृगोऽनेनवचसैवमब्रवीतीतिशब्दज्ञानमुत्पद्यत इत्याह— । शब्दार्थेति ॥ ६ ॥ संस्कारप्रत्ययसंयमसिद्धिमादर्शयति—। पूर्वजातीति ।

पूर्वजाति परिज्ञानं संस्कार संयमादपि ।
प्रत्ययेपरचित्तस्य ज्ञानं संयमतो मतम् ॥७॥
न तत्सालम्बनं तस्याविषयत्वाच्चयोगिना ।
संयमात्कायरूपस्य तद्ग्राह्यत्वनिवर्त्तनम् ॥ ८ ॥

द्विविधास्संस्काराः । स्मृत्युत्पादन हेतवो वासनाख्याः । जात्यायुर्भोगहेत वोधर्म्माधर्म्माख्याः । तेषु संयमात्पूर्वासामतीतानां जातीनां जन्मनां ज्ञानं साक्षात्कारो

जायते जातीत्यु पलक्षणं पूर्वदेशकालकुल कर्म्मणामपिसा-
क्षात्कारोजायते तत्राप्ययंविवेकः। वासनाख्य संस्कार
मात्र संयमा त्पूर्वंजाति स्मरण मात्रभवति धर्माधर्माख्य
संस्कार संयमात्तु जात्यायुर्भोगसात्र साक्षात्कारः।
उभयविध संस्कार संयमात्तु, अस्मिन्देशे कुलेऽमुष्मि-
न्निमुधर्म्माहं भूत्वाऽमुष्मिन्कालेऽदःकर्माकार्षमित्यादि
सर्वंसाक्षात्क्रियते धर्माधर्माख्य संस्कार संयमाद्भाविज-
न्मापि साक्षात्क्रियते योगिनेत्यपि वेदनीयम्। केन
चिन्मु,खरागादिलिङ्गेन गृहीते प्रत्यये संयमतः परचि-
त्तस्य ज्ञान मुत्पद्यते सरागं विरागंवेति ननु मुखरागा-
दिलिङ्गेन सरागंविरागंवा परचित्तमित्ययोग्यप्यध्य
वसातु'क्षमते—इति तत्र कृत संयमस्य योगिनः को
विशेष इति चेन्न विशेषतः परचित्त विषय ज्ञापक लि-
ङ्गालाभेपि योगिनस्तज्ज्ञानसम्भवात् ॥७॥ चित्तमात्रमेव
योगीजानातिसरागं विरागंवेति नामुष्मिन्विषयेसरागं
विरागं वेति जानाति रागविरागालम्बनीभूत विषयस्य
संयमेना विषयीकृतत्वादित्याह—। नतदिति। सालम्बनं
सविषयम्। तत्—चित्तम्। न जा नाति। तस्य—आ-
लम्बनस्याविषयत्वात्—योगिना संयमेनासाक्षात्कृत-
त्वात्। सविषय प्रत्यय संयमेतु सालम्बनस्यापि परचि-
त्तस्य ज्ञानं सम्भवति तदालम्बनस्य विषयीकृतत्वादिति

भावः कायरूपे संयमसिद्धिमाह—। ०संयमादिति। कायरूपस्य संयमात्तद्रूपे या ग्राह्यत्वरूपा शक्तिस्तस्या निवर्त्तनं प्रतिबन्धो भवतीत्यर्थः ॥८॥ शक्ति प्रतिबन्धे सति-फलमाह—। अन्तर्धानगतिरिति।

अन्तर्धानगतिश्चक्षुः प्रकाशायोगसम्भवात्।
अपरान्तपरिज्ञानमायुर्विपाक संयमात्॥ ९॥

ग्राह्यत्वशक्तिसद्रूपवता सार्द्धं सात्त्विकचक्षुःप्रकाश संयोगस्य असम्बन्धजननेन योगिनः कायरूपे संयमेनतस्या निवर्त्तितत्वादिति चक्षुःप्रकाशसंयोगासम्भवादन्तर्धानमुत्पद्यते योगिन इतिभावः। एतेन शब्दाद्यन्तर्धानमप्युक्तं वेदितव्यं तद्यथा शब्दे संयमाद्भावयतो योगिनः पादतलशब्दं पठतश्च पाठध्वनितालिकां वादयतश्च करतालिकां गायतश्च गानं न परः कश्चिच्छृणोति रससंयमात्तु न योगिकायरसमास्वादयन्ति दंशमशकादयः। गन्धसंयमात्तु न तत्कायं कश्चिज्जन्तुर्जिघ्रति स्पर्शसंयमात्तं कश्चित्स्पृशतीति। सिद्ध्यन्तरमाह—। अपरान्तेति। आयुर्विपाकं कर्म द्विविधं सोपक्रमं निरुपक्रमं च यत्फलजननाभिमुख्येन वर्त्तते तत्सोपक्रमं तद्विपरीतं च निरुपक्रमं तत्र संयमात् किंशीघ्रविपाकं किञ्चिरविपाकमिति धारणादिदार्ढ्यादपरान्तस्य शरीर वियोगस्यामुष्मिन् देशे कालेवाऽमुष्य शरीर वियोगो भविष्यतीति ज्ञानमुत्पद्यते संयमिनः॥ ९॥ अप-

रान्तध्यानस्य सर्वसाधारणमुपायान्तरं निर्दिशति—। अ-रिष्टेभ्य इति।

अरिष्टेभ्योऽथवोदेति मैत्र्यादिषु बलानि च।
बलेष्वश्वबलादीनि जायन्ते तस्य संयमात्॥१०॥

पिहितकर्णकालिककौष्ठ्यवायुघोषाश्रवण—विकृतपुरुषदर्शन—स्वर्गादिदर्शन—कनकतरुदर्शन—स्वप्नदृष्टतादिषु सुखाद्यवयवादर्शनादीन्यरिष्टानि—तेभ्यः शरीर वियोगं जानाति। सोऽयं योगिनोरयं भेदः। योगीनिश्चयेना योगी संशयेन जानातीति। मैत्रीकरुणामुदितासु संयमात्सिद्धिमाह—। मैत्र्यादिष्विति। मैत्र्यां संयमात्सर्वाणस्य सर्वेषां चार्थमित्वं प्रतिपद्यते—एवं करुणादिष्वपि वेदितव्यम्। यत्कश्चिद्धस्तिबले वायुवेगे सिंहवीर्य्येऽश्वबलेवाऽऽलीयत्वं भावयतोऽस्य संयमिनस्तद्युक्तत्वमाविर्भवतीत्याह—। बलेष्विति। अश्वबलेसंयमादश्वबलोभवति हस्तिबले संयमाद्धस्तिबलो भवति सिंहवीर्य्ये संयमात्सिंहवीर्य्योभवति वायुवेगे संयमाद्वायुवेगो भवतीत्यादि॥१०॥ ज्योतिष्मती या मनसः प्रवृत्तिरुक्ता तस्याय आलोकस्तस्य सूक्ष्मव्यवहित विप्रकृष्टेष्वर्थेषु विन्यासात्तं तमर्थमधिगच्छतीत्याह—। प्रवृत्तीति।

प्रवृत्त्यालोकविन्यासात्सूक्ष्माद्यर्थ परिग्रहः।
भुवनावगमस्सूर्य्ये संयमाच्चन्द्रसंयमे॥११॥

ताराव्यूहपरिज्ञानं ध्रुवेतद्गति दर्शनम्।
कायव्यूहं विजानाति कृत्वा नाभौ तु संयमम्॥१२॥

सूर्य्ये यस्संयमं करोति तस्य भूर्भुवादि सप्तभुवन ज्ञानमुत्पद्यत इत्याह—भुवनेति। चन्द्रे संयमे कृते सति ताराणां सन्निवेशस्य ज्ञानमुत्पद्यत इत्याह—चन्द्रेति। ज्योतिः प्रधाने निश्चले ध्रुवे कृत संयमस्य ताराणां गत्यादिज्ञानमियंतारा—अयंग्रहश्चैयताकालेन गच्छती-त्येवंरूपमुत्पद्यत इत्याह—। ध्रुव इति। बाह्यसिद्धीः प्रदर्श्य सम्प्रत्याभ्यन्तरसिद्धीः प्रदर्शयितुमुपक्रमते—। कायेति। नाभौ—षोडशारे नाभिचक्रे संयमं कृत्वा योगी काये योव्युहो विशिष्टरसनाड्याद्यवस्थानं तं विजानाति साक्षात्करोतीत्यर्थः॥ ११ ॥१२॥ जिव्हाया अधस्तात्तन्तु-स्ततोऽधस्ता कण्ठस्ततोऽधस्तात्कूपस्तत्र संयमाद्योगिनः क्षुत्पिपासे न बाधेते-इत्याह—। संयमादिति। कण्ठतोऽ-धस्तादगर्त्ताकार प्रदेशोयस्तत्स्पर्शात्प्राणादीनांक्षुधाद्या भवन्ति तस्मिन् कृतसंयमस्य क्षुद्धेतुकस्पर्शाभावात्क्षुत्पिपा-सादयोनिवर्तन्त इति भावः॥ कण्ठकूपस्याधस्तादुरसिकू-र्म्माकारा कूर्म्माख्यानाड़ी तस्यां कृत संयमस्य चेतः स्थि-रपदं लभते-इत्याह—। स्थिरत्वमिति। शिरः कपाले ब्रह्म

संयमात्कण्ठकूपे तु निवृत्तिः क्षुत्पिपासयोः।
स्थिरत्वं कूर्म्मनाड्यां च ज्योतिषि सिद्ध दर्शनम्॥१३॥

रन्ध्राख्यमस्त्यक्षिद्रं प्रकाशस्थाज्योतिरभिधीयते तत्र ज्योतिषि कृतसंयमस्य सिद्धानांद्यावापृथिव्योरन्तराल चारिणां दर्शनम्भवतीत्याह—। ज्योतिषीति ॥१३॥ सर्वज्ञानोपायमाह—। सकलमिति।

सकलं प्रातिभाद्वेत्ति हृदये चित्त वेदनम्।
पुरुष विषयाप्रज्ञा पौरुष बोधसंयमात् ॥ १४ ॥

प्रागुत्पद्यमानं यथार्थज्ञानं प्रतिभा-तस्यां संयमेक्रियमाणे यत्सयथाऽन्तरालपेऽत्र विवेकज्ञानस्य पूर्वरूपं तारकज्ञानमुदेति तत्प्रातिभमुच्यते तस्माद्योगी सकलं सर्वं वेत्ति जानातीत्यर्थः यथोदेष्यत्सवितुः प्राक्तनप्रभयैव निखिलपदार्थ प्रकाश एवमुत्पत्स्यमानविवेकज्ञानात्प्राक् तारकेण प्रातिभेनैव सकलविषयप्रकाश इति हृदयमिति ॥ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकंवेश्म तद्धृदयं तत्कृतसंयमः परचित्तगतं सर्वं जानातीत्याह—। हृदय इति। पुरुषज्ञानमाह—पुरुषेति । पौरुषस्वरूपमात्रावलम्बनोयोबोधः परित्यक्ताहङ्कारे चित्तसत्त्वे चिच्छायासङ्क्रमस्तत्र संयमात्पुरुष विषया प्रज्ञा पुरुषज्ञानमुत्पद्यते ॥ १४ ॥ पौरुषेयबोधसंयमोत्पन्नोक्तज्ञानफलमाह—। तत इति। ततः पुरुष विषयप्रज्ञायाः।

ततः प्रातिभमाद्दर्शः श्रावणं वेदना तथा।
वार्त्ताऽऽस्वादश्चजायन्ते दिव्यज्ञानानि योगिनः ॥१५

प्रातिभंपूर्वोक्तं ज्ञानम् । आदर्शश्चाक्षुषं ज्ञानम् । श्रावणं श्रोत्रजं ज्ञानम् । वेदना-स्पार्शनं ज्ञानम् । वार्त्ता-घ्राणजं ज्ञानम् । आस्वादो रासनं ज्ञानम् । ननु सर्वस्ये-वैतादृशज्ञानानि जायन्ते तेषु पुरुष ज्ञानस्य का उपयोग-इत्याह—। दिव्येति । आदर्शस्यदिव्यरूपंविषयः । श्रावण-स्यदिव्य गन्धः । आस्वादस्यदिव्योरस ॥ १५ ॥ प्राति-भादयः पूर्वोक्ताः फलविशेषास्समाहित चित्तस्योत्पद्यमा-नास्समाधावुपद्रवा भवन्ति व्युत्थाने च सिद्धय इत्याह—। समाधाविति ।

समाधावुपसर्गास्ते व्युत्थाने सिद्धयोमताः ।
बन्धकारणशैथिल्यात्प्रचारावगमादपि ॥ १६ ॥
चित्तस्य निक्षिपेद्योगीचित्तं देहान्तरेषु च ।
असङ्गो जलपङ्कादावुदानसङ्गतोजयात् ॥ १७ ॥

पुरुषज्ञानस्य कायप्रवेशरूपं फलान्तरं दर्शयति—। बन्धेति । व्यापिनोरात्मचित्तयोः कर्म विशिषेण यच्छरी-रान्तर्वेदनं स बन्धस्तस्य कारणं योधर्माधर्मरूपः कर्माशय-स्तस्ययदानिकृत पुरुषज्ञानाच्छैथिल्यम्भवति तदा चित्तं वहिश्चरति वहिश्चरतस्तस्य यः प्रचारः—हृदयाद्विषया भिमुख्येन गमनं तस्यावगमादनेन प्रकारेण चित्तं वहि-श्चरतीति ज्ञानात् । चित्तवहनाड्यादिकं यो योगी जा-नीयात्सचित्तं देहान्तरेषु परशरीरेषु निक्षिपेदावेशयेत्—

निक्षिप्ते च चेतसि मधुकरराजमनुमक्षिका इव तदन्विन्द्रियाण्याविशन्ति तथा च सजीवं मृतंवा शरीरमाविश्य सर्वंत्राप्यव्याहतरतीति । प्राणापान समानव्यानोदान समानाः पंच प्राणवायवः । हृदयान्मुखनासिकाग्रेण प्रणयनात्प्राण उच्यते नाभि प्रदेशात्पादाङ्गुष्ठपर्य्यन्त मपनयनादपान उच्यते व्याप्य नयनात्सर्वशरीर व्याप्तौ व्यान उच्यते ह्वकाटिकादेशादाशिरो वृत्तेरूर्द्धं नयनादुदान उच्यते नाभिं संवेष्ट्य समन्तान्न यनात्समान उच्यते तत्रोदानस्य संयमद्वारेण जयादितरेषां निरोधाच्च जलपंककंटकादिषु न सज्जत इत्याह—। असङ्ग इति । जले नद्यादौ । पंके कर्दमे । आदिना कण्टकादिपरिग्रहः । तेषुगच्छतोप्यस्यैषां स्पर्शो न भवति ॥१६॥१७॥

उदानजयस्य फलान्तरमाह—। उत्क्रान्तिरिति ।

उत्क्रान्तिश्च भवेज्ज्वालस्समानमरुतोजयात् ।
सम्बन्धसंयमाद्दिव्यं श्रोत्रमाकाशशब्दयोः ॥ १८ ॥
सम्बन्ध संयमात्कायाकाशयोर्लघुसत्स्वपि ।
समापत्तेश्च सिद्धस्यगतिराकाशमण्डले ॥ १९ ॥

उदानजयेनातिलघुत्वाज्जलादौ मग्नोपि तूलपिण्डवदूर्ध्वमागच्छति न तत्र निमज्जतीत्युत्क्रान्तिशब्दार्थः । समानजयसिद्धिमाह— । ज्वाल इति । समानस्यसमरुतोवायोः प्राणस्य संयमद्वारेण जयाद्वशीकरणात् ।

ज्वालोज्ज्वलनञ्चवृत्ति । अग्नेस्तेजसा ज्वलन्निव योगी प्रकाशते कदाचित्तेन तेजसा शरीरमपि दहति यथासती-भवपत्नीपितृपराधकुपिता स्वेन तेजसा शरीरं ददाहेति पुराणप्रसिद्धिः । श्रोत्रदिव्यत्वोपायमाह—। सम्बन्धेति । आकाशश्रोत्रयोर्देशदेशिभावरूपसम्बन्धस्य संयमात् दि-व्यं दिव्यशक्तिमच्छ्रोत्रं श्रवणेन्द्रियं भवति येन युगपत्सू-क्ष्मव्यवहितविप्रकृष्टशब्दान् शृणोति ॥ १८ ॥ कायाका-शसम्बन्ध संयमाल्लघुतूलसमापत्तेश्च लघुत्वाज्जले पादा-भ्यां विहरति ततस्तूर्णतन्तुजालेन संचरमाण आदि-त्यरश्मीनालम्ब्य यथेष्टमाकाशेन गच्छतीत्याह—। सबन्धेति । लघ्विति भाव प्रधानो निर्देशः । लघुत्व यत्तु तूलादावित्यर्थः ॥१९॥ शरीर निरपेक्षा वहि र्भूतस्य मन-सोवृत्तिर्महाविदेहाऽकल्पिता । शरीरसापेक्षा मनसो वृत्तिर्विदेहा कल्पितयाऽकल्पितां महाविदेहां प्रसाध्य परकायेपि प्रविष्टुमीष्टे तयैवाकल्पितमहाविदेहया योगि-नस्सात्त्विक प्रकाशावरणरूप क्लेशादिक्षयो भवतीत्याह—। वहिरिति ।

वहिरकल्पिता वृत्तिर्विदेहामहती ततः ।
योगिनोयतचित्तस्य प्रकाशावरणक्षयः ॥ २० ॥

वहिरित्यतः प्राक् मनस इति पूरणीयम् ॥ २० ॥ प-ञ्चभूतानां स्थूलत्वादिपञ्च धर्म्मेषु संयमाद्भूतजयो भवतीत्याह—। स्थूलेति ।

स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वेषु संयमात्।
भूतजयस्ततोऽणिमादिप्रादुर्भावोऽपि जायते ॥२१॥

स्थूलभूतानां दृश्यमानं विशिष्टरूपं स्वरूपं गन्धस्नेहोष्णताप्रेरणावकाशदान लक्षणं कार्यं, सूक्ष्मं तन्मात्राणि। अन्वयिनः सर्वत्रकारणतयाऽनुगता गुणाः। अर्थवत्त्वं गुणेषु भोगापवर्गसम्पादन शक्तिः। एषु पञ्चरूपेषु संयमाद्भूतजयो भवति॥ भूतजयफलमाह—तत इति। आदिना लघिममहिमगरिमप्राप्तिप्राकाम्येशित्ववशित्वानि गृह्यन्ते। तत्राणिमाऽणुभावो येन शिलामपि प्रविशति लघिमा लघुभावो यतस्सूर्यमरीचीनालम्ब्य सूर्यलोकं गच्छति। महिमा महतो भावो यतो महान् भवति गरिमा गुरोर्भावो गुरुत्वं यतो भवति बलिन्मति न तं कश्चिच्चालयितुं क्षमते। प्राप्तिः स्थितस्यापीष्टदेशेनावयव सम्बन्धो यतश्चन्द्रमसमङ्गुल्यैव स्पृशति। प्राकाम्यमिच्छानभिघातः। ईशित्वं भूतभौतिकानां प्रभवस्थितिलयेष्टे वशित्वं भूतभौतिकान्यस्य वशे गच्छन्तीति॥२१॥ भूतजयस्य फलान्तरमाह—तद्धर्मेति। तदा बुद्धिस्थयोगिकाय परामर्शः। तस्य योगिकायस्य ये धर्मा रूपादयस्तेषामनभिघातोऽनाशो भवति नास्य कायरूपादेर्वाय्वादिना शोषादिकं भवति चकारः फलान्तरसूचकः। ततोऽपि च तद्धर्मानभिघातादपि च कायसम्पदुत्पद्यते। का कायसम्पदिति तल्लक्षणमाह—कायेति।

तद्धर्मानभिघातश्च कायसम्पत्तोऽपि च ।
कायसम्पद्वत्वं रूपलावण्यं वज्रसंहतिः ॥ २२ ॥

यदाऽस्य कायरूपादेर्वह्नि वाय्वादिनादाहशोषणादिकं न भवति दर्शनीयोऽतिशय बलोवज्रसंहननश्च तदा भवतीति भावः । यद्वा तद्धर्मेत्यत्र पूर्वोक्तपञ्च भूतानां तदा-परामर्शस्तथाचायमर्थः । तेषां पृथिव्यादिपञ्च भूतानां ये धर्मा मूर्त्यादयस्तैरनभिघातोऽ निरोधो योगिकायस्य भवति नास्य कायक्रियां पृथिवी मूर्त्यारुणद्धियतो भूतस्या धस्तात्तलादिकमपि गन्तुं समर्थो भवति नास्य कायंक्लि-ग्धाश्चापः क्लेदयन्ति यतो वर्षस्वपि स्नान्तमपि जलेऽवतिष्ठते नास्य कायं वह्निर्दहति यतो वह्निमध्येऽपि विहरति नास्य कायं वायुश्शोषयितुमुत्पातयितुं वेष्टे यतो निष्कम्पोऽ ग्न्युष्णवदनायज्ञ स्थिरं गिरिवनादौ निदाघे प्यभयं समास्ते नास्य कायं गगनमनावर्त्तुं शक्नोति यतोऽनावरणात्मके-प्याकाशे भवत्यावृत्तकायस्सिद्धानामप्यदृश्यो भवतीति भूतधर्मानभिघातः ॥ ततोऽपि चेत्यत्रापि चशब्दोरवधार-णार्थत्वाङ्गीकारेण ततश्चेत्यनेन च नियन्त्र भूतपञ्चकस्वी-कारेण भूतजयादित्यर्थो लभ्यते ॥ २२ ॥ इन्द्रियजयोपाय-माह—। संयमादिति । स्वरूपस्मितान्वयार्थवत्त्वान्यादि-पदार्थाः ।

संयमाद् ग्रहणादीनामिन्द्रियविजयो भवेत् ।
ततो मधुप्रतीकाः स्युर्विवेकख्यातिमाचतः ॥२३॥

अधिष्ठात्सर्वभावानां सर्वज्ञातृत्वमेव च।
वैराग्यादपि कैवल्यं दोषबीजपरिक्षयः ॥२४॥

ग्रहणमिन्द्रियाणां विषयाभिमुखीवृत्तिः। स्वरूपं सामान्येन प्रकाशः। अस्मिता—अहङ्कारानुगमः। अन्वयार्थवत्वे पूर्ववत्। इन्द्रिय जयफलमाह—। तत इति। तत इन्द्रिय जयात्। मधुप्रतीकास्तिस्रस्सिद्धयो भवन्ति। मनोजवित्व विकरण भाव प्रधान जयाख्यमधुप्रतीकाः शरीरस्यमनोवद्गति लाभो मनो जवित्वम्। कायनिरपेक्षाणामिन्द्रियाणां वृत्तिलाभोविकरण भावः। सर्ववशित्वं प्रधानजय इति। इदानीं सपादार्द्धश्लोकेनान्तःकरण जयमाह—। विवेकेति। अन्तःकरणे कृत संयमस्य यासत्वपुरुषान्यताख्याति मात्र रूपं विवेकख्याति मात्रं तस्मिन्सति सर्वभावानां आधिष्ठाऽधिष्ठान मधिष्ठातृत्वम्। सर्वज्ञातृत्वं च भवति—इयंविशोकानामसिद्धि रप्युच्यते यां प्राप्ययोगी सर्वज्ञो मुक्त बन्धनोयथेष्टमापद्यते। एतस्यां विशोकायां सिद्धावपि यदावैराग्यं जायते तदा सर्वदोषबीजाविद्यानाशे आत्यन्तिकी दुःखनिवृत्तिस्सम्पद्यते इत्याह—वैराग्यादिति ॥ २३ ॥ २४ ॥

चत्वारःखल्वमी योगिनः प्रथम कल्पिकः १ मधुभूमिकः २ प्रज्ञाज्योतिः ३ अतिक्रान्तभावनीयः ४ तत्र प्रथमाऽभ्यासीप्रवृत्त मात्र ज्योतिः। नत्वनेन परचित्तादि-

गोचरं ज्ञानरूपं ज्योतिर्वशीकृतम् । ऋतम्भरप्रज्ञो द्वितीयो निरुक्तमधुप्रतीकसिद्धिमान् भूतेन्द्रियजयी तृतीयः । कृतकर्त्तव्यसाधनोऽस्य सप्तधाप्रान्तभूमिः प्रज्ञोत्ता स चतुर्थः । तत्र प्रथमस्य स्थानस्वामिनो देवा नोपमन्त्रयितारो भवन्ति भो दिव्यान् भोगान् भुङ्क्ष्वेति, । यतस्सोऽभ्यासमात्र एव प्रवृत्तोऽसम्पादितदिव्यसुखभोगसाधनः । नापि द्वितीयस्योपमन्त्रयितारो देवा यतस्सोऽभ्यासं कृत्वा भूतेन्द्रियमात्रजय्यसम्पादितसकलसाधनः चतुर्थस्य नोपमन्त्रयताऽपि देवानामुपमन्त्रणं स्पृशति तृणीकृत्य देवतदीयभोगान्सम्पादितानुत्तमसुखसाधन इति मधुमतीं भूमिं साक्षात्कुर्वतस्तृतीयस्य योगिनो देवा उपनिमन्त्रयितारो भवन्तीति स्थान्युपनिमन्त्रणे नानेन तृतीय योगिना संगस्मयौ कर्त्तव्यौ यतस्सङ्गस्मयकरणे समाध्युत्साहः पुनर्घोरसंसाराङ्गारेषु पापच्यत इति तृतीययोगिनं प्रत्याह—। स्थानीति ।

स्थानिनिमन्त्रणे सङ्गाभिमत्यकरणं पुनः ।
अनिष्टात्तद्विवेकोत्थं ज्ञानं क्षणक्रमे यमे ॥ २५ ॥

सङ्गो विषयाभिलाषः । अभिमतिः स्मयोऽहं सर्वप्रार्थनीय इति ज्ञानम् ॥ वक्ष्यमाणभेदप्रतिपत्तिहेतुज्ञानस्वरूपमाह—। तदिति । क्षणानां यः क्रमः पौर्वापर्येण परिणामः । तत्र संयमाद्यज्ज्ञानमुत्पद्यते तद्विवेकोत्थं

विवेकजं ज्ञानमुच्यते ॥२५॥ तस्य फलं दर्शयितु माह—।
अन्यतयेति ।

अन्यतयानवच्छेदाद्दै शलक्षणजातिभिः ।
तुल्ययोस्तुततो ज्ञानं सर्वं विषयमक्रमम् ॥२६॥
सर्वथाविषयं ज्ञानं तारकं च विवेकजम् ।
सत्त्वपुरुषयोश्शुद्धिसाम्ये कैवल्यमीरितम् ॥२७॥

इतियोगमकरन्दे तृतीयो विभूतिपादः ॥

अन्यतया भिन्नत्वेन । अनवच्छेदात्—अग्रहात् । पदार्थानां भेदहेतवोजातिलक्षण देशा भवन्ति जात्याभेदो यथा।यंकरटोयं सरटः। जात्यातुल्ययोर्लक्षणेन भेदोयथा-यंगौश्शबलीऽयंरक्तः। जातिलक्षणाभ्यां तुल्यपरिमाणयोर्द्वयो रामलकयोरयं पूर्वभागस्थोऽ यंपृष्ठभागस्थइति यदाजा-तिलक्षणदेशेभ्यस्तुल्ययोरुभयोर्भेद प्रतिपत्तिर्नजायते तदा-तुल्ययोर्ज्ञानं ततो विवेकजात्क्षणक्रम संयमोत्थाज्ज्ञाना-द्भवति तदेव वर्द्धमानं सर्वविषयं सर्वथायुगपदवगाह्-मानं सत्त्व पुरुषयोः शुद्धिसाम्येन कैवल्यहेतु भवती-त्याह—। सर्वविषयमिति। सर्वाणि महदादीनि वि-षयायस्येति सर्वविषयं भाव्यपि विद्यमानत्वेन युग-पद्य विषयीकरोत्यतोऽक्रमम् । अतीतादि सर्वविषय-त्वात्सर्वै रूपादिधर्म्मैर्विषयावगाहनाच्च सर्वथाविषय-मुच्यते संसारार्णवतारणादिदमेवतारकम् । सत्त्वशुद्धिः

सत्त्वां विवेकख्यातौ बुद्धितत्त्वस्य कार्य्याजननम् । पुरुष बुद्धिवृत्तिसारूप्य निवृत्तिः । बुद्धितत्त्वस्य कर्तृत्वादि निवृत्त्या करणे लये सति पुरुषस्योपचरितभोगनिवृत्त्याऽऽत्यन्तिकी दुःख निवृत्तिः कैवल्यं मोक्ष इत्यर्थः ॥२६॥२७॥

इति श्रीयोगमञ्जर्यां योगमकरन्दव्याख्यानरूपायां कुलयशस्वि शोस्त्रि प्रणीतायां तृतीयो विभूति पादः ।

सम्प्रति कैवल्याख्यं चतुर्थपादमारभमाणस्तत्रादौ सिद्धीनामनेकजत्वं सूचयति—। जन्मौषधीति ।

जन्मौषधितपोमंत्रसमाध्युत्पन्न सिद्धयः ।
पूरणा त्प्रकृतीनान्तु परिणामोन्य जन्मनः ॥ १ ॥

जन्मनस्सिद्धिर्यथा कपिलस्य स्मरन्ति हि सांख्यप्रवर्त्तकःकपिलो महर्षिस्सर्गादौ ज्ञानवैराग्यैश्वर्य्य सम्पन्नः प्रादुर्बभूवेति मन्त्रसिद्धिराकाशगमनाणिमादिप्रादुर्भावः । तपस्सिद्धिः प्राचेतसविश्वामित्र प्रभृतिमहर्षीणाम् । समाधिजाश्चसिद्धयः प्राक् प्रतिपादिताः । योह्यस्मिञ्जन्मनि जात्यन्तरं परिणामस्स प्रकृतीनामापूरादुभवतीत्यर्थं स्पष्टयति—। पूरणादिति । पाश्चात्यजन्मप्रकृतयोऽस्मिञ्जन्मनि विकारानापूरयन्तीति भावः । प्रकृतयश्चकायेन्द्रिय परिणामहेतवोगुणविशेषाः ॥१॥ ननु धर्म्माधर्म्मादिनिमित्तमपेक्षमाणाः प्रकृतयोविकारानापूर्य्यजात्यन्तरेण परिणमन्त इत्यत आह—। क्षेत्रिकवदिति । यथा क्षेत्रिकः ।

क्षेत्रिकवत्ततोभेदः प्रकृत्यावरणस्य तु।
जायते नहि धर्म्मादि निमित्तं तत्प्रयोजकम् ॥२॥

कृषीवलःकेदारात्केदारान्तरे जलंपिप्लावयिषुर्जल गति प्रतिबन्धकावरणभेदमात्रं करोति तद्वत्। ततोऽनुष्ठीयमानधर्म्मादेः प्रकृतीनामपूर्वेण कायेन्द्रियरूपेण परिणामोन्मुखानां गुण विशेषाणाम्। आवरणमावरकमधर्म्मादि तस्यैव विरोधित्वाद्भेदः क्षयोजायते नहि धर्म्मादि तासां प्रकृतीनां परिणामे प्रयोजकन्निमित्तम्भवति। यथा कृषीवलभिन्नावरणानिसलिलानि स्वयमेव केदारात्केदारान्तरमागत्यापूरयन्ति केदारंतद्वद्धर्म्मादिनिमित्त प्रतिहतावरकाधर्म्माः प्रकृतयस्स्वयंविकारानापूरयन्ति नतु विकार जनने धर्म्मादिनिमित्तमपेक्षन्ते नहि कार्य्येण कारणं विकारजनने प्रवर्त्यते कारणस्यावरणभेदमात्रं तु कार्य्येणापि कर्त्तुं शक्यमित्यावरणभेदमात्रं धर्म्मादिनिमित्ताद्भवतीतिभावः ॥२॥ ननु योगाङ्गानुष्ठानोत्पन्नानेक कायनिर्म्माणशक्ति र्योगी यदाऽनेक शरीराणि युगपत्सृजति तदा किमेकमनस्कानि तानि सृजति वाऽनेकमनस्कानीत्यत आह—। निर्मिमीत इति।

निर्मिमीतेऽन्य चित्तानि सोऽस्मितामात्र चित्ततः।
वृत्तिभेदेत्वनेकेषां चित्तमेकं प्रयोजकम् ॥ ३ ॥

योगी स्वनिर्मितेषु कायेषु यानि-अन्यानि भिन्नानि

चित्तानि तानि—अस्मितामात्रचित्ततः । अस्मितामात्र-चित्तं मूलकारणमुपादाय निर्म्मीत सृजति—अनेकेषां भिन्नानां निर्म्माणचित्तानां वृत्तीनां प्रवृत्तीनां व्यापाराणां भेदे नानात्वे तु—एकं योगिनश्चित्तं प्रयोजकमधिष्ठातृ-त्वेन प्रेरकम्भवति । प्रेरकचित्तभिन्नत्वे तु स्वनिर्मितका-येषु निर्म्माणचित्तगतवृत्तिभेदं न जानीयादित्यग्नेर्वि-स्फुलिङ्गा इव योगिचित्तान्निर्माणचित्तानि निस्सरन्तीति भावः ॥ २ ॥ जन्मौषधिमन्त्रतपस्समाधिजभेदात्पञ्चविधं निर्म्माणचित्तं तत्र चतुर्थ्यस्समाधिजचित्तस्य वैलक्षण्य-माह—। तत्रेति ।

तत्र ध्यानसमुत्पन्नमनाशयं मनोमतम् ।
परेषां त्रिविधं कर्म्माशुक्लाकृष्णन्तु योगिनः ॥४॥

तत्र जन्मजादिपञ्चचित्तेषु, ध्यानसमुत्पन्नं समाधिजं,-यन्मनश्चित्तमित्यर्थः । ननु परेषामिव योगिनोऽपिकर्म्मा-शयवलात्सुखदुःखाभिसम्बन्धस्स्यादित्यत आह—। परे-षामिति । परेषामितरेषामयोगिनां कर्म्म त्रिविधन्त्रिप्र-कारं शुक्लकृष्णं शुक्लकृष्णञ्चेति योगिनस्तु अशुक्लाकृष्णं कर्म्मेति तत्र शुक्लफलदं कर्म्म योगादि शुक्लं यागानुष्ठातृ-णाम् । अशुभफलदं ब्रह्महत्यादिकर्म्मकृष्णं तच्च नारकि-णाम् । योगिनस्त्वशुक्लाकृष्णं कर्म्म यस्मात्क्रियमाणमपित-त्फलत्यागानुसन्धानेनानुष्ठितत्वाच्च किञ्चित्फलमारभत

इति नेतरेषामिव चीणक्लेशस्य योगिनः कर्म्माशयफला-त्सुखदुःखाभिसम्बन्धः ॥४॥ कर्म्मणां स्वविपाकानुरूपफल-जनकत्वेनेति योगिनोऽशुक्लाकृष्ण कर्म्मानुरूपा शुक्लाऽक-ष्णवासना अभिव्यक्ता भवन्ति न ता जातिदेशकालाद्य-वच्छिन्नास्सत्योजायन्तेऽभिव्यक्तीभवितुमीशतेजात्यायुर्भो-गफला धर्म्माधर्म्माख्या वासनाःपूर्वकृतनिखिलाभिस-म्बन्ध शून्यत्वेन योगिनो जन्मान्तराभावादिति तत्सम्ब-न्धिनामितरेषां शुक्लाकृष्णाः शुक्लकृष्णाः-श्च वासना भवन्ति त्रिविधकर्म्मविपाकानुरूपा इत्याह—। त्रिविधा-दिति।

त्रिविधात्तद्विपाकानुगुणानामेव जायते।

वासनानामभिव्यक्ति र्देशकालादि जातिभिः ॥५॥

त्रिविधात्-त्रिप्रकारात्कर्म्मणः। तस्य कर्म्मणोयोवि-पाकः फलंदेवमनुष्यतिर्य्यग्जात्यादि तस्यवा अनुगुणा अनुरूपा वासनास्तासां देशकालकुलजातिभिरभिव्यक्ति र्भवतीत्यर्थः। भावस्त्वयं येन कर्म्मणा यादृक्शरीरमार-ब्धं देवतिर्य्यङ्मनुष्यादि तत्तच्छरीरानुसारेणतास्तावा-सनाः प्रादुर्भवन्ति तत्तज्जाति देशकालादीनवलम्बमाना इति ॥ ५ ॥ ननु जाति देशकाल व्यवहितानां वासनानां स्वविपाकानु रूपस्मृत्याद्युत्पादने आनन्तर्य्येन सम्भवति देशाद्यैर्व्यवधायकत्वादिति तासांनिष्फलत्वं सम्भासमि-त्यत आह— । पाश्चात्यमिति।

पाश्चात्त्यं विप्रकृष्टानां स्मृति वासनयोरपि ।
ऐक्यरूप्यादनादित्वं तासां नित्यतयाऽऽशिषः ॥६॥

पाश्चात्त्यम्—आनन्तर्यम् । विप्रकृष्टानां देशकालजातिव्यवहितानामपि वासनानाम् । तत्र हेतुमाह—। स्मृतीति । स्मरण संस्कारयोस्समान विषयत्वादिति हेतुः । स्मृति हेतु वासनानामनादित्वं निर्दिशति—। अनादित्वमिति । आशिषः—ममशरीरेन्द्रियादिभिर्वियोगोमाभूत्सुखसाधनं मे सदा भूयादित्येवं रूपसङ्कल्पस्य नित्यतयानित्यत्वेन तत्कार्याणां तासां स्मृतिहेतु वासनानामनादित्वमिति ॥६॥ वासनानां हानोपायमाह—। हेत्विति ।

हेतुफलाश्रयालम्बसङ्गृहीतास्तु वासनाः ।
सवर्त्तन्ते ऽप्यये ऽमीषामपीतिस्सन्निरूपिता ॥७॥

वासनानां संस्काररूपाणां हेतु रनुभवस्तस्य च रागादयस्तेषामविद्येति पारम्पर्येण साक्षाद्वा हेतु रविद्या । फलं स्मृत्यादि । आश्रयो वासनानां बुद्धितत्त्वम् । य एवानुभवस्य विषयस्स एववासनानामालम्बः । एभिर्हेत्वादिचतुर्भिस्सङ्गृहीता नियन्त्रितास्सत्यो वासनास्स्वकार्याभिमुख्यो वर्त्तन्ते—अमीषां हेत्वादिचतुर्णामप्यये विनाशे सत्यासां वासनामपीतिर्विनाशस्सन्निरूपितः कथितः ॥७॥ ननु सतामभावासम्भवा-

दसतांचोत्पत्त्यसम्भवात्कथं वासनानामपीतिरुच्यत इत्यत आह—अस्तीति।

अस्ति स्वरूपतोऽतीतं भविष्यच्चाध्वभेदतः।
धर्माणां ते गुणात्मानो व्यक्तास्सूक्ष्माश्च भेदतः॥८॥

धर्म्मविपरिणामश्चित्तरूपो धर्म्म्याऽपवर्गपर्य्यन्तमेकरूपो धर्म्मास्त्वनेके भवन्त्याविर्भवन्तस्तिरोभवन्तश्च तस्माद्धर्म्माणामतीतानागतभेदत इत्सद्रूपेणावस्थानान्नासत्त्वं वासनानामतीतभावेनावस्थानाच्चनतासां फलजनकत्वमपीति भावः। अक्षरार्थस्तु धर्म्माणां वासनादीनाम्। अध्वभेदतः—अतीतानागतावस्थाभेदात्। अतीतं कृतव्यापारं भविष्यच्चकरिष्यमाणव्यापारं स्वरूपतस्तद्रूपेण—अस्ति विद्यते तेऽध्वानो गुणात्मानो गुण विशेषात्मकाः। व्यक्ताववर्त्तमान धर्म्मतामापन्नाः सूक्ष्माश्चातीतानागत भावमापन्नाः। भेदतः—व्यक्तत्वाव्यक्तत्वधर्म्माभ्यां भिन्नत्वादिति ॥ ८ ॥

धर्म्यैकत्वमाह—। एकत्वादिति।

एकत्वात्परिणामस्य वस्तुतत्त्वमितिस्थितम्।
साम्येऽपि वस्तुनश्चित्त भेदाद्विभक्तता तयोः॥९॥

प्रकाश क्रियास्थिति शीलानामनेकत्वेऽप्यङ्गिरूप चित्त परिणामैकत्वादस्तत्त्वं चित्ततत्त्वमेकमितिस्थितम्। अयमभावोयद्यपि गुणास्त्रयस्तथापि तेष्वेकस्याङ्गिभावेनावस्थानाच्चित्ततत्त्वमेकमेव तथाहि यदा सत्त्वं रजस्तमसी

अभिभूय शान्तामात्मनोवृत्तिं लभते तदा रजस्तमसी—अङ्गं सत्त्वात्मकं चित्ततत्त्वमङ्गिकम्। एवं रजस्सत्त्वतमसी—अभिभूय यदा घोरामात्मनोवृत्तिं लभते तदा-सत्त्वतमसी—अङ्गं रज आत्मकश्चित्ततत्त्वमङ्गिकम्। एवं तमस्सत्त्वरजसौ—अभिभूय यदा मूढामात्मनोवृत्तिं लभते तदा सत्त्वरजसी—अङ्गं तम आत्मकश्चित्ततत्त्वमङ्गिकमिति त्येकश्चित्तधर्म्मि। ननु ज्ञान विषययोरेकत्वेन कथमेतदित्याह—साम्येपीति वस्तुनोविषयस्य साम्येऽपि—एकत्वेपि। चित्तानां ज्ञानानां भेदान्नानात्वात्। तयोर्ज्ञान विषययोर्विभक्तता भेद इतरथा विषयाणां ज्ञान स्वरुपत्वे एक पुरुषविविधज्ञान भास्यत्वं पुरुषान्तरेण गृहीतस्य पुरुषान्तरग्राह्यत्वं च विषयस्यानुपपन्नं स्यादेक ज्ञाननाशेन नष्टत्वात्परबुद्धेर प्रत्यक्षत्वाच्चेति ज्ञान बाह्या विषयाः ॥ ९ ॥ ज्ञानातिरेके हेत्वन्तरमाह—। न चेति ॥

नचैक चित्त तन्त्रं हि वस्तु तद प्रामाणिकम्।
परिणामि भवेच्चित्तं ज्ञाताज्ञातस्वरूपतः॥ १० ॥

वस्तु विषयो नैकचित्त तन्त्रभवितु मर्हति—एकचित्त तन्त्रं चेद्वस्तु स्यात्तदा तदप्रामाणिकं स्याच्चित्ताभावेऽपि वस्तु प्रत्यभिज्ञानस्याबाधितस्य सत्त्वेनेति नानुभूयमानवस्तु बाधसम्भवः। ननु चित्तं युगपत्सर्वं वस्तुस्वरूपावगाहित्वेना परिणामि भवेदित्यत आह। परिणामीति। विषयस्य

ज्ञाताज्ञातस्वरूपत्वं चित्तस्य परिणामितामवगमयतीत्यत-श्चित्तं न युगपत्सर्वार्थानवगाहते वस्तूपरागापेक्षित्वाच्च चित्तस्येति चित्तोपरक्तं वस्तु ज्ञातम्भवति न सर्वम् ॥ १० ॥ ननु पुरुषोऽपि चित्तवत्परिणामी स्यादित्यत आह—। चे-तस इति।

चेतसोवृत्तयो ज्ञाताः प्रभोरपरिणामिताम्।
बोधयन्ति स्वयं भास्वं दृश्यत्वात्तस्य नेष्यते ॥११॥

चेतसश्चित्तस्य वृत्तयःप्रत्ययाः ज्ञातास्सर्वदाऽध्यक्षाः प्रभोः पुरुषस्यापरिणामितां चिद्रूपतां बोधयन्ति ज्ञाप-यन्ति यदि चित्तवत्पुरुषः परिणामी भवेत्तदा शब्दादि विषयवच्चित्तवृत्तयोऽपिज्ञाताज्ञाता भवेयुर्नचि शब्दादि विषयवच्चित्तवृत्तयोज्ञाताज्ञाता भवन्तीति नतप्रभुः पुरुषस्तद्वत्परिणाम्यत एवस्वयं प्रकाशोपि तस्य चित्तस्य तु दृश्यत्वात्परिणामित्वात्स्वयंभास्वं स्वयंप्रकाशत्वं नेष्यते इति ॥११॥ चित्तस्यास्वप्रकाशत्वे हेत्वन्तरमाह—। एकदेति।

एकदा चोभयाऽज्ञानाच्चित्तान्तर प्रकाशने।
बुद्धेरति प्रसङ्ग स्यात्स्मृति साङ्कर्य्यं मेव च ॥१२॥

एकदा—एकस्मिन् क्षणे। उभयस्यस्वस्य परस्य चाज्ञा-नादनवधारणाच्चित्तस्यस्वप्रकाशमित्यर्थः। यद्वा एकदा—एकस्मिन् क्षणे उभयस्य ज्ञानद्वयस्यानुभवसिद्धस्यापला-

पासक्षवान्नाणु चित्तमित्यर्थः । यदि चित्तमणुस्यात्तदै-कस्मिन् क्षणउभयावधारणं न स्यात्—भवत्येकस्मिन्नपि क्षणे उभयावधारणमिति नाणुचित्तम् ॥ ननु चित्तस्य चित्तान्तरेण ग्रहो भवष्यतीत्यतआह—। चित्तान्तरेति। बुद्धेर्बुद्ध्यन्तरवेदने तस्याअपि बुद्धित्वाद्बुद्ध्यन्तरं संवेदकं तस्यापि बुद्ध्यन्तरमित्यनवस्थात्मकातिप्रसङ्गाद्दुरुद्धरता-आपद्येत बुद्ध्योः परस्परं भासकत्वेऽन्योन्याश्रयः स्वयं प्रकाशत्वं तु परिणामित्वादेवानुपपन्नमिति बुद्धेर्बुद्ध्यन्तर प्रकाशने स्मृति सङ्करःप्राप्नोतियावत्यो बुद्धयस्तावत्य-स्तत्संस्कारात्स्मृतयो वाच्या स्वधाच स्मृतीनाम्।नन्वेन किंविषयिणीयं स्मृतिरिति नज्ञायेत॥१२॥ ननु सिद्धान्ते कथं बुद्धेस्संवेदनं सम्भवतीत्यतआह—। तदाकारेति।

तदाकारसमापत्तौ स्वबुद्धि संवेदनं चितेः।
सर्वार्थं द्रष्टृदृश्याभ्यां रक्तं चित्तमिहोच्यते ॥१३॥

चितेः पुरुषस्यसन्निधौ बुद्धेस्तदाकारसमापत्तौ स्व-बुद्धेः स्वस्यबुध्यात्मनोवेदनं प्रकाशोभवतीत्यर्थः। चिच्छक्तिं बुद्धिविशिष्टतां यदासम्पद्यतेतदाबुद्धिस्स्वात्मानमवभास-यति न केवलेतिनास्सन्मते बुद्धेर्बुद्ध्यन्तर प्रकाशनंस्वयं प्रकाशत्वं च स्यात्तदास्मन्मतेबुद्धेरेवस्वयं प्रकाशत्वं बुद्ध्यन्तर संवेदनं चापलपासवे द्रष्टारं स्वयंप्रकाश मितिद्रष्टारं मपलपन्तो भवन्तएवनिरस्त दोष दुष्टाः। पुरुषाकारता-

मिव प्राप्तं चित्तं यदा विषयाकारेण परिणमते तदा तस्य सर्वग्रहण सामर्थ्यंजायत इत्याह—। सर्वार्थमिति । चित्तं ज्ञेयेन विषयेणस्वपरिणामिवृत्त्यारूढस्य सम्बन्धेन सम्बद्धं स्वयमपि विषयत्वाद्द्रष्टारं पुरुषमनुगृह्णाति यदा-त्मीयवृत्त्या तदा सर्वार्थं मुच्यते इति ॥ १३ ॥ द्रष्टरिप्रमाण-माह—। चित्तमिति ।

चित्तं संहत्यकारित्वात्परार्थं वासनान्वितम् ।
कोऽहमासं कथं त्वासं किंस्विदिदं कथं त्विदम्॥१४॥
इतःपरं भविष्यामः कोऽकथं किंविदं कथम् ।
भविष्यतीति भावास्ते निवर्त्तन्ते विवेकिनः॥१५

वासनाभिर्विचित्राभिरन्वितं चित्रीकृतं चित्तं परार्थं पुरुषार्थं भवितु मर्हति संहत्यकारित्वात्संघात पदा-र्थत्वादित्यर्थः । यथाशयनासनाभ्यङ्ग गृहादयस्संघात पदार्थाः परार्था दृष्टास्तथा चित्तेनापि संहत्यकारिणा भवितव्यं तस्य संघातान्तरार्थत्वे तु तस्यापि संघातान्त-रार्थतयाऽनवस्था प्रसज्येतेति परार्थतया चित्तस्य परप-दार्थं पुरुषसिद्धिः ॥ एवं द्रष्टृ दृश्ययोरन्यत्वेसाधिते यस्त-योर्विशेषं पश्यत्यहमस्मादन्य इति तस्य विवेकिनो ज्ञात चित्तस्वरूपस्य चित्ते या आत्मत्व भावनास्तानिव-र्त्तन्त इति सार्द्धश्लोकषट्केन कैवल्यं निर्णीतं भावनास्वरूपं दर्शन पूर्वकंतासांनिवृत्तिमाह—। कोऽहमिति ॥१४॥१५॥

ननु भावना निवृत्तेः किम्भवतीत्यत आह—। चित्तमिति।

चित्तं कैवल्य प्राग्भारं निम्नं विवेकजात्तदा।
यएतदीयच्छिद्रेषु प्रत्यया वासनोदिताः ॥ १६ ॥

यदस्य विवेकिनश्चित्तं वहिर्मुखं विषयसक्तमासीत्त-द्विवेकजाज्ज्ञानान्निम्नं वहिर्मुखतां परित्यज्यान्तर्मुखं सत्तदाऽऽत्मभावभावनानिवृत्तौ सत्यां कैवल्य प्राग्भारं कैवल्यफलं कैवल्यारम्भं वा भवतीति॥ विवेकवाहिनश्चि-त्तस्यान्तरालेषु येऽन्तरायभूताः प्रत्यया भवन्ति तेषांहेतु-माह—। य इति। येऽन्तरायभूताः प्रत्ययाः। एतदीयस्य विवेकस्थितस्य चित्तस्य छिद्रेषु—अन्तरालेषु—प्रत्ययाः—ज्ञानानि प्रादुर्भवन्तिते वासनाभिर्व्युत्थानानुभवजनित संस्कारै रुदिताउत्पन्नाज्ञेयाः व्युत्थाना नुभवजनित सं-स्काराणां चिरन्तनत्वेनदार्ढ्यात्पुनः पुनरावृत्तिर्भवती-तिभावः ॥ १६ ॥ विवेकप्रतिहन्धिनस्ते प्रत्यया विवेक वाहिनि चित्ते यदा प्रादुर्भवेयुस्तदैषां प्रत्ययानां हानं क्लेशवत्कर्त्तव्यमित्याह—। हानमिति।

हानमेषां तदा प्रोक्तं क्लेशवद्योगवित्तमैः।
प्रसंख्यानेऽकुसीदस्य सर्वथाभेदख्यातितः ॥१७॥

धर्म्म मेघस्समापत्ति स्ततः क्लेशनिवर्त्तनम्।
सर्वावरणमलैर्हीनं ज्ञानमल्पार्थकं तदा ॥१८॥

यथाऽविद्यादि क्लेशानां पूर्वंहानमुक्तं तथाव्युत्थाना-

नुभवजनित संस्काराणामपि हानं कर्त्तव्यं यथा ज्ञानाग्निदग्धबीजभावाः क्लेशा न पुनः प्ररोहन्ति तथा व्युत्थानानु भवजनित संस्कारा अपीतिभावः। एवं प्रत्ययान्तरानुत्पादेन स्थिरी भूते चेतसि प्रसंख्यानमुत्पद्यते तस्मिन्सति योगिनस्समाध्युत्कर्षोपायं सफलंसार्द्धैकश्लोकेनाह—। प्रसंख्यान इति। यावतांतत्त्वानां यथाक्रमं यथा भावेन व्यवस्थितानां युगपत्परस्परविलक्षण स्वरूप भावनं प्रसंख्यानं तस्मिन् सति अकुसीदस्य फलानाकांक्षिणो योगिनः प्रत्ययान्तरानुत्पादे सर्वथा सर्व प्रकारेण भेदख्यातितो विवेकज्ञानात्। धर्म्ममेघस्समापत्तिस्समाधिर्भवति धर्म्मसमुल्लाक्षणं परमपुरुषार्थं साधकं मेहतिसिञ्चतीति धर्म्ममेघः। ततस्तस्माद्धर्म्ममेघात्। क्लेशानामविद्याद्यभिनिवेशान्तानां निवर्त्तनं निवृत्तिर्विनाशो निरोधो भवतिछिन्ने क्लेशात्मकेमूले कुशला कुशलाश्च कर्म्माशयाः स्वयमेव छिन्ना न प्ररोहं लभन्ते निवृत्तेषु क्लेशकर्म्माशयेषु तदा तस्मिन्काले सर्वैः सकलै रावरणमलै रावरकदोषैः क्लेशकर्म्माशयै र्हीनं रहितं ज्ञानम्। अल्पार्थकंस्वल्प विषयं भवतीत्यर्थः। सर्वावरणमलापेतस्य ज्ञानस्य शरद्गगन सदृशस्यानन्त्यात् ज्ञेयमल्पं गणनास्पदम्भवतीतिभावः। धर्म्ममेघस्य फलान्तरमाह—। गुणानामिति। अतः—अस्माद्धर्म्म मेघात्॥१७॥१८॥

गुणानां कृतकार्य्याणां परिणाम क्रमोऽप्यतः ।
नोत्सहते क्षणं स्थातुं निवृत्तो जारवत्तदा ॥१९॥

गुणानां सत्त्वरजस्तमसां कृतं निष्पादितं भोगापवर्ग लक्षणं कार्य्यं यैस्तेषां परिणामस्याऽऽ पुरुषार्थं समाप्ते रानुलोम्येन प्रातिलोम्येन चाङ्गाङ्गिभावस्थितिलक्षणस्य योऽसौ क्रमोवक्ष्यमाणस्सनिवृत्तः परिसमाप्तस्सन्—क्षणम-पित्यल्पकालमपि तदास्थातुं नोत्सहते। अत्रानुरूपं दृष्टा-न्तमाह—। जारवदिति। यथाकश्चिज्जारः परस्त्रीलम्पटः कस्मिंश्चिदन्यस्य गेहेपरस्त्रिया सह संगत्य तत्र तदास्था-तुंनोत्सहते प्राण विनाश भयात्तद्वत्॥ १९ ॥ उक्तक्रमस्य लक्षणमाह—। क्रम इति।

क्रमोऽपरान्त निर्ग्राह्यः प्रतियोगी क्षणस्य तु ।
गुणाप्ययः प्रतिष्ठा वा चितेः कैवल्यमीरितम् ॥२०

इति योगमकरन्दे श्री कुलशष्ठि शास्त्रि प्रणीते
चतुर्थः कैवल्यपादः ।

क्षणोऽल्पीयान् कालस्तस्य यः प्रतियोगी तद्वर्त्तमानः परिणामसमनन्तरजायमानः परिणामः। अपरेष्वनुभूतक्षण वर्त्तमानपरिणामेषु अन्तनिर्ग्राह्यः पश्चात्सङ्कलनबुद्धेरा-न्तिमक्षणेऽनुभूयमानः यः परिणामस्सक्रम उच्यते। इदा-नींफलभूतस्य कैवल्यस्यासाधारणं रूपमाह—। गुणाप्यय इति। गुणानां समाप्त भोगापवर्गलक्षण पुरुषार्थानां योऽ

प्यग्रः प्रतिप्रसवः परिणामसमाप्तौ विकारानुद्भवः । वा चितेः चिच्छक्तेः पुरुषस्य प्रतिष्ठा वृत्तिसारूप्य निवृत्त्युपचरितभोग निवृत्तौ स्वरूपेणावस्थानं कैवल्य मपवर्ग इरित मुदाहृत इति सर्वैः स्वरूपावाप्तये यत्नो विधेयो। येन न घोरसंसाराङ्गारेषु परिपाकोभवेदिति ।

सङ्गृह्य सूत्रनिचयं प्रथमं महर्षे
र्मूलामृतं व्यरचयं जनहर्षहेतोः ।
आलोच्य भाष्यममला रचिता मयैषा
योगामृतञ्च मनसां मुदमादधातु ॥ १ ॥

इति श्री योगमकरन्दव्याख्यानस्वरूपायां सांख्ययोग वेदान्तोपाध्यायकाशीस्थवैदिकधर्म्मवर्द्धनी सभाकार्य्य निर्वाहकसारस्वतविप्रवंशोदधि पूर्ण चन्द्र श्रीगिरिधाय्यार्जन दर्शनाध्यापक श्रीरामभिश्रशास्त्रि शिष्येण गयाधर्म्म सभाचार्य्य श्रीकुलयशस्विशास्त्रिणा प्रणीतायां योगमञ्जर्य्यां चतुर्थः कैवल्यपादः समाप्तश्चायं ग्रन्थः ।

श्रीः ।

# शुद्धि सूचीपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| यत्राविवेकं | यत्राविवेकं | १ | १५ |
| वा | वाऽरे | १ | १८ |
| विदूषां | विदुषां | २ | ६ |
| सुखनेति | सुखेनेति | २ | ८ |
| तत्वस्य | तत्त्वस्य | ३ | १० |
| अर्वाग्द्दशा | अर्वागृद्दशा | ३ | २० |
| तत्तश्चर्म्म | तत्तद्धर्म्म | ४ | ८ |
| द्वितयं | दृद्वितयं | ६ | १४ |
| मनोभिधेति | मनोऽभिधेति | ६ | २० |
| स्वरूपाच्छुतौ | स्वरूपाच्चुरतौ | ११ | १४ |
| इत्यचा | इत्यच | १२ | २१ |
| व्याप्य | व्याप्य | १३ | १२ |
| ब्राह्मण | ब्राह्मण | १३ | १५ |
| हयत्व | हेयत्व | १४ | २ |
| नज्यैष्ठत्वे | ज्यैष्ठत्वेन | १४ | १४ |
| निद्रावि | निद्रादि | १४ | १५ |
| प्रत्यक्षस्या | प्रत्यक्षस्य | १५ | ४ |
| वीत | वीतं | १५ | ८ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| भावानां | ऽभावानां | २२ | ८ |
| पत्य | पश्य | २२ | २१ |
| नेक | ऽनेक | २४ | १२ |
| धर्म्मकेन्यो | धर्म्मकेभ्यो | २४ | २१ |
| परमपर | परापर | २५ | २ |
| तस्मान्न | तस्मात् | २७ | २ |
| समाप्तेरपि | समापत्तेरपि | २७ | ११ |
| पश्चा | पश्च | ३२ | १३ |
| सर्वंज्ञ | सर्वज्ञ | ३३ | २ |
| मिते | मितेः | ३३ | २० |
| सानं | मानत्वं | ३८ | १४ |
| सिद्धिः | सिद्धेः | ३८ | १७ |
| दिलिना | दिना | ३९ | २० |
| सुक्तं | मुक्त | ४० | ५ |
| सुक्तं | मुक्त | ४० | ९ |
| मनस्थिति | मनस्स्थिति | ४० | १० |
| स्तृगाः | स्तृग् | ४१ | १ |
| नते | ते | ४१ | ६ |
| ॥ १७ ॥ | ॥ १७ ॥ १८ ॥ | ४१ | ७ |
| वेपथुः | वेपथू | ४१ | ९ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| वृत्ति | वृत्तिं | ४४ | ६ |
| ॥ २६ ॥ | ॥ २५ ॥ २६ ॥ | ४८ | २१ |
| समाधौ | समापत्तौ | ४९ | ४ |
| तस्या | तया | ५३ | १२ |
| प्रत्ययासिद्ध | प्रत्यच्चासिद्ध | ५५ | १२ |
| भवतो | भवता | ५७ | ७ |
| दिशे | दिशेषु | ५८ | १ |
| स्त्व | स्त्वा | ५८ | १ |
| यथा | तथा | ६० | ३ |
| कर्म्माशय | कर्म्माशयो | ६२ | २० |
| कर्म्मणि | जन्मनि | ६३ | २१ |
| पुण्य | पुण्या | ६४ | २०. |
| घटादिष्वप्यस्तीति तेषामपिसंयोगा नुपपत्ति | प्रकृतौनास्तीतितस्या, अपि संयोगोपपत्ति | ६९ | ११ |
| द्विभ्यो | द्विभ्वौ | ६९ | १७ |
| जात्यादिकं | जत्वं | ७२ | १३ |
| ता | त | ७३ | १३ |
| एक | एकः | ७४ | ७ |
| योगा | योग | ८२ | २ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| स | सा | ८३ | ३ |
| न्येष | न्येषां | ८६ | १० |
| ङ्गन | ङ्गुन | ८४ | १५ |
| गच्छति | गच्छन्ति | ८६ | ३ |
| तद्दापि | तद्दापिन | ८८ | २१ |
| तिरोधते | तिरोद्धते | ९० | ७ |
| ६ | ॥ ३ ॥ | ९१ | १ |
| द्धर्मा: | द्धर्मा: | ९१ | ५ |
| धर्मिण | धर्मिण: | ९१ | १० |
| अन्यथा | अन्यथा | ९१ | १७ |
| महि | मही | ९४ | १० |
| विष्सु | विष्णु | ९६ | ६ |
| तमथ | तमर्थं | ९८ | १९ |
| व्युहो | व्यूहो | ९९ | ११ |
| कुर्माकारा | कूर्माकारा | ९९ | १७ |
| रस | रस: | १०१ | ६ |
| विदेहा | विदेहाकल्पिता | १०३ | १४ |
| स्नेहात्मता | स्नेहोष्णता | १०४ | ३ |
| पुषान्यता | पुरुषान्यता | १०६ | १२ |
| प्रथमाभ्यासी | प्रथमोऽभ्यासी | १०६ | २१ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| शुक्ल | शुक्लं | १११ | १७ |
| शुक्लफलदं | शुभफलदं | १११ | १८ |
| योगादि | यागादि | १११ | १८ |
| शुक्लाकृष्ण | अशुक्लाकृष्ण | ११२ | ३ |
| सत्योजायन्ते भि | सत्योऽभि | ११२ | ५ |
| शुक्ला | शुक्लाः | ११२ | ८ |
| सङ्ग्हीनासु | सङ्गहीनासु | ११३ | १२ |
| स्वरूपं | स्वरूप | ११८ | २० |
| कत्तव्यं | कर्त्तव्यं | ११९ | १६ |